सटीकः

# वैद्यक-परिभाषा-प्रदीपः ।



श्रीमद्गोविन्दसेनसंगृहीतः ।


पण्डितकुलपति

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्यात्मजेन

पण्डित श्रीआशुबोध विद्याभूषणभट्टाचार्य्येण


विरचितया टीकया समलङ्कृतः तेनैव प्रकाशितश्च ।




द्वितीय संस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे मुद्रितः ।

ई १९३४ ।



रक्षितसर्वस्वत्वकः ।



[illegible] मुद्रा[illegible] ।

## तृतीयः खण्डः ।

| विषया: । | पृष्ठाङ्का: । |
|---|---|

## चतुर्थः खण्डः ।

सटीक:

# परिभाषा-प्रदीप:।



## प्रथम: खण्ड:।

मङ्गलाचरणम्।—

नमोऽस्तु नीरद-स्वच्छ वपुषे पीत-वाससे।
यस्यास्येन्दुसुधां वंशी पपौ शब्दस्वरूपिणी ॥१॥

ग्रन्थकर्त्तु: परिचय:।—

कृष्णवल्लभसेनस्य तनुजेन वितन्यते।
श्रीमद्गोविन्दसेनेन परिभाषाप्रदीपक: ॥ २ ॥

ग्रन्थस्य मूलनिर्देश:।—

पूर्वैर्मुनिभिरादिष्टा स्वे स्वे तन्त्रे क्वचित् क्वचित्।
परिभाषा मया सा सा समाहृत्य विलिख्यते ॥ ३ ॥

---

अथ सद्वृत्त श्रीगोविन्दसेन: चिकीर्षितस्य ग्रन्थस्य निर्बाधं परिसमाप्त्यु: आरम्भे शिष्टपरम्परानुमोदितं मङ्गलमाचरति, नम इति।—शब्दस्वरूपिणी शब्दमयी, वंश्या' शुषिरवत्त्वेन शब्दप्राधान्यात इति भाव:, अथच शब्दस्वरूपिणी वाङ्मयी, वाग्देवीति यावत, वंशी यस्य पीतवासस:, आस्यं मुखमेव, इन्दु: चन्द्र: तस्य आस्येन्दो: मुखचन्द्रस्य, सुधाम् अमृतं, पपौ पीतवती, वादनकाले मुखसंयोगात, वाणीवल्लभत्वाच्चेति भाव:, नीरद: मेघ:, नवजलधर इति यावत, स इव स्वच्छं निर्मलं, नेत्रसुभगमिति यावत, वपु: शरीरं यस्य तस्मै नीरदस्वच्छवपुषे नवजलधर-रमणीयविग्रहाय, पीतवाससे पीताम्बराय, तस्मै श्रीकृष्णाय, नम: अस्तु तिष्ठतु, ममेति शेष:, श्रीकृष्णं नमामि इति फलितार्थ: ॥ १ ॥

ग्रन्थकर्त्ता स्वपरिचयं ददाति, कृष्णेति।—परिभाषा ग्रन्थसङ्क्षेपार्थम् अवयवार्थ-मनादृत्य समुदायार्थे विशिष्टसंज्ञाविशेष इति यावत, सा प्रदीप इव, दीपवत् अव्यक्तादीनां प्रकाशकत्वादिति भाव:, परिभाषाप्रदीप: तत: स्वार्थे क:। दीपो यथा प्रभाद्वारा सर्वरूपप्रकाशक:, एवं स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारक:

ग्रन्थस्य उपयोगिता निर्देशः ।—

ध्वान्ते पथि चारिणां यथा दीपः प्रदर्शकः ।
नानाशास्त्रज्ञभिषजां सङ्ग्रहोऽयं तथा भवेत् ॥ ४ ॥
खण्डैश्चतुर्भिरादिष्टः सङ्ग्रहो नातिविस्तरः ।
वैद्याः कुर्वन्त्वत्र यत्नं व्यवहारार्थमुद्यताः ॥ ५ ॥

ग्रन्थस्य अभिधेयनिर्देशः ।—

अव्यक्तानुक्तलेशोक्त-सन्दिग्धार्थप्रकाशिकाः ।
परिभाषाः प्रकाश्यन्ते दीपीभूताः सुनिश्चिताः ॥ ६ ॥

नियमविशेषः परिभाषा इति, तथा च कैयटः,—"अधिकारशब्देन पारार्थ्यात् परिभाषाऽप्युच्यते, क्वचित् परिभाषाऽदय." इति ॥ २।३ ॥

अस्य उपयोगितामाह, ध्वान्ते इत्यादि ।—ध्वान्ते अन्धकारावृते । व्यवहारार्थं विवादार्थं, चिकित्साकर्मणि ऊहापोहपूर्वकविविधसन्देहनिरसनार्थम् इत्यर्थः, "वि नानाऽर्थेऽव सन्देहे हरणं हार उच्यते । नानासन्देहहरणात् व्यवहार इति स्मृतः ॥" इति कात्यायनः; यद्वा—अर्थविशेषबोधनाय शब्दविशेषप्रयोगार्थमित्यर्थः, उद्यताः कृतोद्यमाः ॥ ४।५ ॥

"सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ अभिधेयफलज्ञान-विरहस्तिमितोद्यमाः । श्रोतुं स्वल्पमपि ग्रन्थं नाद्रियन्ते हि साधवः ॥" इत्युक्त्या प्रेक्षावतां प्रवृत्त्यर्थम् अभिधेयादीनामवश्यवाच्यत्वादादौ अभिधेयादीनाह, अव्यक्तेति ।—अव्यक्तादीनां चतुर्णां प्रकाशिकाः बोधिकाः अव्यक्तानुक्तलेशोक्तसन्दिग्धार्थप्रकाशिकाः, तत्र अव्यक्तः अस्फुटः, सामान्येनोक्त इत्यर्थः, स च शीतकषायः कार्य्य इति सामान्यमोक्तौ "षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयोः । आप्लुत भेषजपलं द्रवाख्यायां पलद्वयम् ॥" इत्यादिरूपः, अनुक्तः अनिर्दिष्टः, स च "कालेऽनुक्ते प्रभातं स्यादङ्गेऽनुक्ते जटा भवेत्" इत्यादिरूपः, लेशोक्तः विस्तरेण वक्तव्यानां बाहुल्यदोषपरिहारार्थं दिग्दर्शनार्थञ्च अवयवेनोक्तिः, स च "अलक्तके गोमयरसचन्दने रक्तचन्दनम्" इत्यादिविस्तरोक्तिरूपः, सन्दिग्धार्थः गूढार्थः, सन्देहविषयीभूतार्थ इत्यर्थः, स च वाजिगन्धादिगणेन वीरतर्वादिगणेन वा स्नेहः पक्तव्यः इत्युक्तौ गणोक्तानां तेषां कल्केन क्वाथेन वा पक्तव्यः इति सन्देहे "यत्राधिकारणे-नोक्तिर्गणे स्यात् स्नेहसंविधौ । तत्रैव कल्कनिर्य्यूहाविष्येते स्नेहवेदिना ॥" इत्यादिना सन्देहनिरसनरूप इति; तेषाश्चिन्तने परिभाषेयमव्यक्तप्रकाशिका ज्ञातव्या, एवञ्च

अथ प्रथमतो मानसूत्रं लिख्यते।—

परिमाणं विना क्वापि नागदाज्जायते फलम्।
तस्मात् सर्वे यतन्तेऽत्र परिमाणविधौ सदा॥ ७॥

शार्ङ्गधरस्त्वाह।—

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित्।
अतः प्रयोगकार्य्यार्थं मानमत्रोच्यते मया॥ ८॥

अन्यच्च।—

मानापेक्षितमाचार्य्या भेषजानां प्रकल्पनम्।
मेनिरे यत्नतो मानमुच्यते पारिभाषिकम्॥ इति॥९॥

तत्तु (मानं) मतभेदान्नानाविधं भवति।

अथ कालिङ्गपरिभाषा।—

जालान्तरगतैः सूर्य्यकरैः ध्वंसो विलोक्यते।
षड्ध्वंसीभिर्मरीचिः स्यात् ताभिः षड्भिश्च राजिका॥१०॥

---

सति सान्दर्भार्थप्रकाशिका परिभाषा यथा—कस्मिंश्चित् योगे किमपि द्रव्यं न लभ्यते चेत् तदभावे किं ग्राह्यमिति सन्देहे "द्रव्याभावे तु तत्तुल्यं द्रव्यमेव प्रदीयते। मध्वभावे गुडो जीर्णः शाल्यभावे तु षष्टिकः॥" इत्यादिरूपा ज्ञेया। एवञ्चाव्यक्तादर्थप्रकाशन-मस्याभिधेयमुक्तं भवति, तथा अव्यक्तादिना सह पद्यस्य वाच्यवाचकलक्षणसम्बन्धः, फलञ्च यथाशास्त्रभेषजकल्पनेन आतुराणां रुग्विनिवारणमिति॥ ६॥

परिमाणज्ञानस्य उपयोगितामाह, परिमाणमिति।—नास्ति गदो रोगो यस्मात् तस्मात् अगदात् औषधात्, "भेषजौषधभैषज्यान्यगदो जायुरित्यपि" इत्यमरः॥ ७॥

परिमाणज्ञानस्य उपयोगितायां शार्ङ्गधरवचनमाह, नेति।—मानेन परिमाणेन। युक्तिः योगः, रोगनिवारणसमर्थः सुष्ठु योग इत्यर्थः। प्रयुज्यते रोगनिरासार्थमिति प्रयोगः औषधं, तत्कार्य्यार्थं प्रयोगकार्य्यार्थम् औषधनिर्माणार्थमित्यर्थः। अन्य-मानव्यवच्छेदार्थं प्रयोगकार्य्यार्थमित्युक्तं, अन्य-मानस्य पृथगुक्तेः॥ ८।९॥

"मानञ्च द्विविधं प्राहुः कालिङ्गं मागधं तथा। कालिङ्गात् मागधं श्रेष्ठमेवं मानविदो विदुः॥" इति चरकोक्त्या कालिङ्गमागधभेदेन मानस्य द्वैविध्यात् आदौ प्रथमोद्दिष्टं कालिङ्गमानमाह, जालान्तरगतैरित्यादि।—मानमेतत् सौश्रुतमिति केषाञ्चिन्मतं, तत्तु न किञ्चित् विशेषप्रमाणमुपलभ्यते, सुश्रुते तदुल्लेखादर्शनात् तथा कालिङ्गपरि-

तिसृभी-राजिकाभिश्च सर्षपः प्रोच्यते बुधैः।
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ॥ ११ ॥
षड्भिश्च रक्तिकाभिः स्यान्माषको हेमधामकौ।
माषैश्चतुर्भिः शाणः स्याद्धरणं तन्निगद्यते ॥ १२ ॥
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते।
क्षुद्रो मोटरकश्चैव द्रङ्क्षणं तन्निगद्यते ॥ १३ ॥
कोलद्वयञ्च कर्षः स्यात् स प्रोक्तः पाणिमानिकः।
अक्षः पिचुः पाणितलं किञ्चित् पाणिश्च तिन्दुकम् ॥ १४ ॥
विड़ालपदकञ्चैव तथा षोड़शिका मता।
करमध्यो हंसपदं सुवर्णं कवलग्रहः ॥ १५ ॥
उडुम्बरञ्च पर्य्यायैः कर्ष एव निगद्यते।
स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ॥ १६ ॥

काशायां षड्भिः रक्तिकाभिः सुश्रुते च पञ्चभिः रक्तिकाभिः माषकनिर्देशादिभि सुधीभिर्विभाव्यम्। जालान्तरगतैः गवाक्षविवरनिपतितैः। "ध्वंसी" इत्यत्र "वंशी" इति पाठान्तरम ; सा तु "त्रसरेणुः" इति पर्य्यायान्तरेणापि अभिहिता भवति। राजिका "राइ" इति प्रसिद्धम। सर्षपः श्वेतसर्षपः। "षड्भिश्च रक्तिकाभिः" इत्यत्र "पञ्चभी रक्तिकाभिः" इति पाठान्तरम, एवञ्च सप्ताष्टनव-दशद्वादशचतुर्दशभिर्गुञ्जाभिरपि क्वचित् क्वचित् माषको दृश्यते, तथा च श्रीकान्तः,—"गुञ्जाभिर्दशभिर्माषश्चतुर्दशभिरेव च। अन्यत्र पञ्चभिर्माषः षड्भिः क्वचिदुदाहृतः॥ सप्तभिर्नवभिर्वाऽपि गुञ्जाभिर्माषकोऽपरः। अष्टाभिर्माषकः क्वापि गौड़े द्वादशभिस्तथा॥" इति। हेमधामकौ इति माषकपर्य्यायौ। "हेमधामकौ" इत्यत्र "हेमधान्यकौ" इति पाठान्तरम्। स एव शाण एव। तद्द्वयं शाणद्वयम्। "क्षुद्रो मोटरकश्चैव द्रङ्क्षणं तत्" इत्यत्र "क्षुद्रको वटकश्चैव वङ्क्षणः स" इति, तथा "मोटरकः" इत्यत्र "मोरटकः" इति च पाठान्तरद्वयम्। षोडशिका षोडशमाषकपरिमिता। "डलयोरलयोर्व्यत्ययः बहुलम्" इति केचित् "कवलग्रहः" इत्यत्र "कवड़ग्रहः" इत्यपि पठन्ति। शुक्तिरष्टमिका इति अर्द्धपलपर्य्यायः। अष्टमिका अष्टमाषपरिमिता॥

शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिमात्रञ्चतुर्थिका ।
प्रकुञ्चः षोड़शी विल्वं पलमेवात्र कोर्त्त्यते ॥ १७ ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते ।
प्रसृतिभ्यामञ्जलि: स्यात् कुड़वोऽर्द्धशरावकः ॥ १८ ॥
अष्टमानञ्च स ज्ञेयः कुड़वाभ्याञ्च मानिका ।
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ॥ १९ ॥
शरावाभ्यां भवेत् प्रस्थश्चतु:प्रस्थैस्तथाऽऽढ़कम् ।
भाजनं कंस-पात्रे च चतु:षष्टिपलञ्च तत् ॥ २० ॥
चतुर्भिराढ़कैर्द्रोण: कलशो नल्वणोऽर्म्मण: ।
उन्मानञ्च घटो राशिर्द्रोणपर्य्यायसंज्ञित: ॥ २१ ॥
द्रोणाभ्यां सूर्पकुम्भौ च चतु:षष्टिशरावक: ।
सूर्पाभ्याञ्च भवेद्द्रोणी वृहद्द्रोणी च सा स्मृता॥२२॥
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभि: ।
चतु:सहस्रपलिका षणवत्यधिका च सा ॥ २३ ॥
पलानां द्विसहस्रञ्च भार एक: प्रकीर्त्तित: ।
तुला पलशतं ज्ञेयं सर्व्वत्रैवैष निश्चय: ॥ २४ ॥
माष-टङ्काक्ष-विल्वानि कुड़व: प्रस्थ आढ़कम् ।
राशिर्द्रोणी खारी चेति यथोत्तरं चतुर्गुणा: ॥ २५ ॥

---

"मुष्टिमात्रम" इत्यत्र "मुष्टिरास्रम" इति पाठान्तरम। चतुर्थिका चतुष्कर्ष इत्यर्थ: । अष्टमानञ्च स ज्ञेय: इत्यत्र स: कुडव: । भाजनादिचतुष्टयमाढकपर्य्याय: । "कंसपात्रे च" इत्यत्र "कंसपात्रञ्च" इति पाठान्तरम । "नल्वण:" इत्यत्र "लल्वण:" इति पाठान्तरम । "वृहद्द्रोणी" इत्यत्र "वाहो गोणी" इति पाठान्तरम । षणवत्यधिका च सा इत्यत्र सा खारी । तुलेति ।—यदुक्तमन्यत्र "तुला पलशतं तासां विंशतिर्भार उच्यते । खारी भारद्वयेनैव स्मृता षड्भाजनाधिका ॥" इति । सर्व्वत्रैव इत्युक्त्या सर्व्वदेशेष्वेव इदं मानं, न केवलं कालिङ्गदेशे, एव-शब्दस्य निश्चयार्थकत्वात् । शार्ङ्गधरेण श्लोकाशीऽयं मागधपरिभाषामध्ये पठित: ; तेन च तट्टीकाकारेणाढ़मल्लेन "न तु केवलं

द्रवार्द्रशुष्कद्रव्याणां मानविषये विशेषनिर्देशः।—

गुञ्जादिमानमारभ्य यावत् स्यात् कुड़वस्थितिः।
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम्॥ २६॥
प्रस्थादिमानमारभ्य द्विगुणं तद्द्रवार्द्रयोः।
मानं तथा तुलायाश्च द्विगुणं न क्वचित् स्मृतम्॥ २७॥

कुडवमानस्य विशेषनिर्णयः।—

मृद्वृक्ष-वेणु-लोहादेर्भाण्डं यच्चतुरङ्गुलम्।
विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुड़वं वदेत्॥ २८॥

योगानां नामनिर्देशविधिः।—

यदौषधन्तु प्रथमं यस्य योगस्य कथ्यते।
तन्नाम्नैव स योगो हि कथ्यते तत्र निश्चयः॥ २९॥

[ इति क.लिङ्गपरिभाषा ]।

---

मगधदेशे" इति व्याख्या मता इति ज्ञेयम्। यथोत्तरं चतुर्गुणा इति—माषापेक्षया टङ्क टङ्कापेक्षया अक्षः इत्यादिक्रमेण उत्तरोत्तरं चतुर्गुणा ज्ञेया इत्यर्थः; उक्तञ्चान्यत्र—"माषाश्चतुर्गुणः शाणः शाणात् कर्षश्चतुर्गुणः। कर्षाच्चतुर्गुणं बिल्वमित्याद्या अपरे मताः॥" इति॥ १०—२५॥

द्रवार्द्रादिद्रव्याणां ग्रहणार्थं परिभाषामाह, गुञ्जादीत्यादि—यावत् कुडवस्थितिः कुडवप्राप्तिः, गुञ्जामारभ्य कुडवपर्य्यन्तमित्यर्थः। कुडवमितयोर्द्रवार्द्रद्रव्ययोः सम-परिमाणत्वे महान् मतभेदो विद्यते, स तु अग्रे स्फुटीभविष्यति। तत् मानम्॥ २६।२७॥

कुडवमितद्रवद्रव्यतोलनार्थमुपायविशेषमाह, मृदिति।—चतुरङ्गुलदीर्घं चतुरङ्गुल-प्रस्थञ्च मृदादिपात्रं कुडवमितद्रवद्रव्याधारमित्यर्थः। लोहादित्यत्र लोहशब्देन सुवर्णाद्यष्टविधं लोहं बोध्यं, तच्च—स्वर्णरजतताम्रारकूट[illegible]सीसकलौहात्मकम्। आदिपदेन चात्र चर्मशृङ्गदन्तादीनां ग्रहणम्॥ २८॥

अथ व्यवहारसौकर्य्यार्थं सिद्धभेषजानां संज्ञाविधान[illegible] यदित्यादि।—यदौषधन्तु इत्यादि निर्देशः प्रायिकत्वेन तथा क्वाथतैलघृ[illegible]चूर्णादिविषयकः ज्ञातव्यः, रसौषधेषु व्यभिचारदर्शनात्॥ २९॥

अथ मागधपरिभाषा।—

त्रसरेणुस्तु विज्ञेयः त्रिंशता परमाणुभिः।
त्रसरेणुस्तु पर्य्याय-नाम्ना ध्वंसी निगद्यते॥ ३०॥
षड्ध्वंसीभिर्मरीचिः स्यात् षण्मरीच्यस्तु सर्षपः।
षट्सर्षपैर्यवस्त्वेको गुञ्जैका च यवैस्त्रिभिः॥ ३१॥
गुञ्जाभिर्दशभिः प्रोक्तो माषको ब्रह्मणा पुरा।
हेमस्य धामकश्चैव पर्य्यायस्तस्य कीर्त्तितः॥ ३२॥
चतुर्भिर्माषकैः शाणः स निष्काष्टक एव च।
धरणशब्दोऽत्र बोध्यः, अन्यत्र शाणपर्य्याये लिखितत्वात्।
शाणौ द्वौ द्रङ्क्षणं विद्यात् कोलं वटकमेव च॥ ३३॥
कर्षार्द्धं द्विगुणः कर्षः सुवर्णश्चाक्षमेव च।
किञ्चिद्विड़ालपदकं पिचुः पाणितलं तथा॥ ३४॥
उडुम्बरं तिन्दुकञ्च कवडग्रहमेव च।
द्वे सुवर्णे पलार्द्धं स्यात् शुक्तिरष्टमिका तथा॥ ३५॥
द्वे पलार्द्धे पलं मुष्टिः प्रकुञ्चश्च चतुर्थिका।
विल्वं षोडशिकाऽऽम्रञ्च द्वे पले प्रसृतं विदुः॥ ३६॥
कुडवः प्रसृताभ्यां स्यादञ्जलिः स निगद्यते।
अष्टमानं शरावार्द्धं तस्य पर्य्यायमेव च॥ ३७॥

---

इदानीं प्राक्प्रदर्शितोद्देशानुसारेण चरकोक्तं मागधमानमाह, त्रसरेणुरिति।—त्रसरेणुरिति जालान्तरगतसूर्य्यकरैर्यत् सूक्ष्मं रजो दृश्यते, तदेव त्रसरेणुर्विज्ञेयः। तत्र परमाणुलक्षणञ्चोक्तं यथा—"जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः। तस्य त्रिंशत्तमो भागः परमाणुः स उच्यते॥" इति। "ध्वंसी" इत्यत्र "वंशी" इति पाठे—वंशरन्ध्रं प्रविष्टं यत् रजस्तत् वंशी, तस्याः त्रिंशता परमाणुभिः या सङ्ख्या सा वंशीति। "चतुर्भिर्माषकैः" इत्यादौ "माषैश्चतुर्भिः शाणः स्याद्धरणं तन्निगद्यते" इति पाठान्तरम्। कर्षार्द्धमिति छेदः। द्विगुणः कर्षार्द्धद्विगुणः, कोलद्वयमित्यर्थः। किञ्चित् तथा विड़ालपदकं पृथक् पदद्वयम्। द्वे सुवर्णे द्वौ कर्षौ। विल्वं षोड़शिकाऽऽम्रञ्च इत्येताः

कुड़वाभ्यां माणिका स्यात् शरावोऽष्टपलं तथा।
माणिकाभ्यां भवेत् प्रस्थो ज्ञेयः षोड़शभिः पलैः॥ ३८॥
चतुःप्रस्थैराढ़कः स्यात् पात्रं कंसञ्च भाजनम्।
अयं भिषग्भिराख्यातश्चतुःषष्टिपलैरिह॥ ३९॥
चतुर्भिराढ़कैर्द्रोणः कथितः पूर्वसूरिभिः।
घटः कलश उन्मानो नल्वणोऽर्मण एव च॥ ४०॥
द्रोणपर्य्यायनामानि कीर्त्तितानि भिषग्वरैः।
अयञ्च पलसङ्ख्यातः षट्पञ्चाशच्छतद्वयम्॥ ४१॥
द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः।
सूर्पाभ्याञ्च भवेद्द्रोणी वृहद्द्रोणी च सा स्मृता॥ ४२॥
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः।
चतुःसहस्रपलिका षण्णवत्यधिका च सा॥ ४३॥
तुला पलशतं प्रोक्तं भारः स्याद्विंशतिस्तुलाः।
पलानां द्विसहस्राणि भारः परिमितो बुधैः॥ ४४॥
माष-शाणौ कर्ष-पले कुड़वः प्रस्थ आढ़कः।
द्रोणो द्रोणी खारी चेति यथोत्तरं चतुर्गुणाः॥ ४५॥

शुष्कार्द्रद्रवद्रव्याणां मानविधौ विशेषनिर्देशः।—

शुष्कद्रव्येष्विदं मानं द्विगुणञ्च द्रवार्द्रयोः।
ज्ञातव्यं कुड़वादूर्द्ध्वं प्रस्थादिश्रुतिमानतः॥ ४६॥

घटपर्य्यायाः। अयम् आढकः। "नल्वणः" इत्यत्र "लल्वणः" इति पाठान्तरम्। अयञ्च द्रोण इत्यर्थः। षट्पञ्चाशच्छतद्वयं षट्पञ्चाशदधिकद्विशतपलानीत्यर्थः। सा खारी। पलशतं सार्द्धद्वादशशरावा इत्यर्थः। "मापकः शाणतिन्दुकौ पलं कुडव-प्रस्थकः। राशिर्द्रोणी खारी चेति यथोत्तरं चतुर्गुणाः॥" इति पाठस्तु प्रामादिकः, यतः प्रस्थस्य चतुर्गुणे कृते आढ़को भवति, न तु राशिः, अत्र तु आढकमनुल्लिख्यैव राशिपदोपादानात्, किञ्च मानपमानमध्ये द्रोणपर्य्याये राशिपदाभावेऽपि अत्र तदुपादानादिति सुधीभिर्द्रष्टव्यम्॥ ३०—४६॥

अत * कुड़वादूर्द्धमित्युक्तौ शरावस्य द्वैगुण्यं स्यादित्यत आह, प्रस्थादि-श्रुतिमानत इति, प्रस्थादिमानमारभ्य इत्यर्थः। कुड़वे किं द्वैगुण्यं न? इत्यत आह, कुड़वादूर्द्धमिति।—अयमभिसन्धिः,—कुड़वादिति दिग्योग-लक्षणां पञ्चमीं ये वदन्ति, तन्मते कुड़वे द्वैगुण्यं नास्तीति, किन्तु कुड़वादत्र ल्यब्लोपे पञ्चमी, कुड़वं व्याप्येत्यर्थः, केचिदत्र एवं व्याचक्षते, तन्मते कुड़वस्यापि द्वैगुण्यम्; यथा—

गुञ्जादिमानमारभ्य यावत् स्यात् कुड़वस्थितिः।
द्रवार्द्रशुष्कद्रव्येषु तुल्यं मानं प्रकीर्त्तितम्॥

इति वचनात्।

अस्यार्थः।—रक्तिकादिमारभ्य कुड़वादर्वाक् तुल्यं मानं कुड़वमारभ्य द्वैगुण्यम्, एतेन कुड़वस्यापि द्वैगुण्यं निश्चलकरेणैव व्याख्यातम्।

अत एवोक्तम्।—

सर्पिःखण्डजलक्षौद्र-तैलक्षीरासवादिषु।
अष्टौ पलानि कुड़वो नारिकेले च शस्यते॥
अनित्या परिभाषेयं यथादर्शनमुच्यते॥

* आशङ्कते, अत्रेति।—कुडवादूर्द्धं कुडवात् परं शरावमानस्य लाभात् शरावस्यापि द्वैगुण्याशङ्का, अतस्तान्निरासार्थमाह, प्रस्थादीति।—एतेन शरावस्य द्वैगुण्याभावः सिद्धः। अत्रैवं ज्ञातव्यं—"शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्त्तितम्। द्विगुणं तत् द्रवेष्विष्टं सद्यश्चैवोद्धृतेषु च॥" इति चरकवचने तथा "शुष्काणामिदं मानमार्द्रद्रवाणाञ्च द्विगुणम्" इति सुश्रुतवचने च गुञ्जादिमानमारभ्य कुड़वपर्य्यन्तानां द्रवार्द्रशुष्काणां सममानत्वानुल्लेखात "ज्ञातव्य कुडवादूर्द्ध" "गुञ्जादिमानमारभ्य—" इत्यादि परिभाषा चरकादिभिरनादृता इति। एवञ्च चरकसुश्रुतप्रमाणानु-सारेण तथा "शुष्कद्रव्येषु यन्मानमार्द्रस्य द्विगुणं हि तत। शुष्कस्य गुरुतीक्ष्णत्वात् तस्मादर्द्धं प्रयोजयेत्॥" इति वचनानुसारेण च द्रवार्द्रयोः शुष्कापेक्षया न्यूनत्व-वीर्य्यत्वात् रक्तिमाषकादौ सर्व्वत्रैव द्वैगुण्यं ग्राह्यमित्येकेषां सुधियां सिद्धान्तः। अथतु, कुडवस्य द्वैगुण्याद्वैगुण्यविषये बहवो मतभेदा विद्यन्ते, ते तु नास्माभिरत्र समाधीयन्ते बहुविवादास्पदत्वात, सर्व्वथा वृद्धव्यवहारः सम्प्रदायश्चानुसरणीयः। प्रयोगविशेषे कुड़वद्वैगुण्यसिद्धौ मतान्तरमाह, सर्पिरित्यादि।—खण्डः इक्षु-विकारः, "खाँड" इति प्रसिद्धः। श्लोकेनानेन सर्पिरादिषु कुडवद्वैगुण्यं

दन्तीघृते कुङ्कुमाद्ये तैलेऽसावुपयुज्यते ॥
न नारिकेले खण्डे च न तैले पलमिष्यते ॥
तथा च।—
कुडवेऽपि क्वचित् द्वित्वं यथा दन्तीघृते स्मृतम्। इति।

अनेनापि निःसन्देहो न प्रतिपाद्यते इति, यतो दन्तीघृतमात्रे द्वैगुण्यमस्ति, न सर्वत्र, कण्ठोक्त्या क्वचिदिति पाठात्। अत्रोच्यते, कुडवे माणिकायां तुलायां पलमाने च द्वैगुण्यं नास्तीति। यथा—

कुडवे माणिकायाञ्च तुलामाने तथैव च।
पलोल्लेखागते माने न द्वैगुण्यमिहेष्यते॥ इति।

अत एव कुडवस्य न द्वैगुण्यम्; किन्तु निश्चलकरव्याख्या दन्तीघृते एव, नान्यत्रेति सङ्क्षेपः॥ (क)

शुष्कापेक्षया आर्द्रस्य द्विगुणग्रहणविधिः।—

शुष्कद्रव्ये तु या मात्रा चार्द्रस्य द्विगुणा हि सा।
शुष्कस्य गुरुतीक्ष्णत्वात् तस्मादर्द्धं प्रकीर्त्तितम्॥४७॥

अस्यापवादमाह।—

वासा-निम्ब-पटोल-केतकि-बला-कुष्माण्डकेन्दीवरी-
वर्षाभू-कुटजाश्वगन्धसहितास्ताः पूतिगन्धामृताः।

परमतमिदं प्रदर्श्य स्वमतमाह, अनित्येति।—अनित्या अनियता, न सार्वत्रिकीत्यर्थः। इयं सर्पिरादिपरिभाषा। यथादर्शनं यथादृष्टम्, आचार्य्यादिसन्निधौ औषधप्रस्तुतविषये यादृक् प्रत्यक्षीकृतमित्यर्थः; यद्वा—यथादर्शनं यथाशास्त्रम। असौ सर्पिरित्यादिपरिभाषा। नेति।—नारिकेलादौ पलप्रस्थप्रयोगो न युज्यते इत्यर्थः। "न नारिकेले खण्डे च तैलेऽष्टपलमिष्यते" इति पाठान्तरे—नारिकेलादिविषये कुडवमाने अष्टपलरूपं द्वैगुण्यं नेष्यते इत्यर्थः। (क)

---

आर्द्रद्रव्यग्रहणे विशेषनियममाह, शुष्केत्यादि।—सा मात्रा। अर्द्धम् इत्यत्र आर्द्रापेक्षया इति शेषः॥ ४७॥

मांसं नागबला सहाचरपुरौ हिङ्ग्वार्द्रके नित्यशः
ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता गणाः ॥४८॥

"गणाः" इत्यत्र "घनाः" इति वा पाठः ।

अत्र इन्दीवरी शतावरी । पूतिगन्धा प्रसारणी । सहाचरः पीतझिण्टी । इक्षुजाता गुडादयः । गणाः भद्रदार्वादि-सालसारादि-दशमूलीप्रभृतयः । घना इति पाठे—घनाः कठिनाः ।

अन्यच्च ।—

गुडूची कुटजो वासा कुष्माण्डश्च शतावरी ।
अश्वगन्धासहचरौ शतपुष्पा प्रसारणी ॥
प्रयोक्तव्याः सदैवार्द्रा द्विगुणं न च कारयेत् ॥४९॥

शार्ङ्गधरमतमेतत् ।

अन्यच्च ।—

वासा-कुटज-कुष्माण्ड-शतपुष्पा-सहाऽमृताः ।
प्रसारण्यश्वगन्धा च नागाह्वातिबलाबलाः ॥
नित्यमार्द्रा प्रयोक्तव्या न तासां द्विगुणो भवेत् ॥ ५० ॥

हस्तिकर्णपलाश-वाट्यालक-गोरक्षतण्डुलाश्चैतत् ।

अथ द्रव्याणामुपयुक्तानुपयुक्तत्वमाह ।—

शुष्कं नवीनं द्रव्यञ्च योज्यं सकलकर्मसु ।
आर्द्रञ्च द्विगुणं विद्यादेष सर्वत्र निश्चयः ॥ ५१ ॥

---

द्रवार्द्रयोर्द्वैगुण्यविधायकपरिभाषाया अपवादमाह, वासेत्यादि ।—नागबला गोरक्षतण्डुला । पुरः गुग्गुलुः । तत्क्षणम् उद्धारक्षणमेवेत्यर्थः । "इक्षुजाता घनाः" इति पाठे—इक्षुरसनिष्पन्नगुडशर्करामत्स्यण्डिकासितोपलादीनि कठिनद्रव्याणीत्यर्थः । वासादीनि उद्धृत्यैव ग्राह्याणि, न शुष्काणि न वा कृतद्वैगुण्यानीति नियमः, तथाविधानामेवैषां फलोपधायकत्वात । शतपुष्पा "शलुफा" इति प्रसिद्धम् । आर्द्राः सद्य उद्धृताः, अशुष्का इति यावत् । सहा सहचरः मुद्गपर्णी वा । नागाह्वः हस्तिकर्णपलाशः, अतिबला गोरक्षतण्डुला, बला श्वेतपीतपुष्पभेदेन द्विविधो नाम्याबलाः, यद्वा—नागाह्वबला नागबला गोरक्षतण्डुला, अतिबला श्वेतबला, बला पीतपुष्पा बला ॥ ४८—५१ ॥

अन्यच्च।—

द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ।
ऋते घृत-गुड-क्षौद्र-धान्य-कृष्णा-विडङ्गतः॥ ५२॥

प्रसङ्गात् स्नेहादेर्गुणागुणमाह।—

स्नेहः सिद्धो गुडादिश्च गुणहीनोऽब्दतो भवेत्।
स्नेहाद्याः पूर्णवीर्य्याः स्युरा-चतुर्मासतः परम्॥ ५३॥
अब्दादूर्द्ध्वं घृतं पक्वं हीनवीर्य्यन्तु तद्भवेत्।
तैले विपर्य्ययं विद्यात् पक्वेऽपक्वे विशेषतः॥ ५४॥

तैलमत्र तिलभवं, न सर्षपादिस्नेहसामान्यपरम्।

अन्यच्च।—

गुणहीनं भवेत् वर्षादूर्द्ध्वं तद्रूपमौषधम्।
मासद्वयात् तथा चूर्णं हीनवीर्य्यत्वमाप्नुयात्॥ ५५॥

---

भेषजविधौ कीदृग्द्रव्यं ग्राह्यं तदाह—शुष्कमित्यादि। द्रव्याणीत्यादि।—धान्यं धान्यकम्। कृष्णा पिप्पली। घृतादीनां पुराणत्वमेव प्रशस्तमित्यर्थः, पुराणत्वञ्चैतेषां संवत्सरादूर्द्ध्वमेव भवति इति विज्ञेयम्॥ ५१।५२॥

इदानीं सर्वेषामेवौषधानां नवत्वपुराणत्वादिभेदेन गुणागुणावाह, स्नेह इति।—स्नेहः घृततैलवसामज्जरूपः। सिद्धः पक्वः। गुडादिश्च इत्यत्र आदिपदेन खण्डाव-लेहादीनां ग्रहणम्। अब्दतः वत्सरात् परमित्यर्थः। आ-चतुर्मासतः परं पाकसमाप्ति-दिवसमारभ्य चतुर्मासानन्तरम् अर्थात् पञ्चममासमारभ्य वत्सरं यावत् स्नेहादयः सम्पूर्णवीर्य्या वर्त्तन्ते, एतेन पक्वस्नेहादयः चतुर्मासपर्य्यन्तमप्राप्तवीर्य्याः द्वादशमासा-नन्तरञ्च हीनवीर्य्या इति विज्ञातव्यम्। केचित्तु परम् अब्दात् परम्, आ चतुर्मासतः चतुर्मासं यावत् इति व्याख्यानयन्ति, "हीनाः स्युर्घृततैलाद्याश्चतुर्मासाधिकास्तथा" इति वक्ष्यमाणवचनान्तरदर्शनात्, तेन षोडश मासान् पूर्णवीर्य्यास्तिष्ठन्तीति फलितम्। तैले विपर्य्ययम् इति वैपरीत्यं, पक्वं तैलं विशेषतश्चापक्वं तैलं यावदधिकं पुराणं भवेत्, तावद्वीर्य्याधिकं भवेदित्यर्थः। गुणेति।—तद्रूपं धातुरसादिविहीनं केवलं सन्नौषधिविषयमित्यर्थः। केचित्तु "तद्रूपमिति यादृशं द्रव्यस्वरूपं तादृशमेव तद्रूपं कथितं, न तु चूर्णादिकल्कितम्; तथा च—धातुरूपं द्रव्यवर्ज्जं न श्रेष्ठं वत्सरोषितम्" इति व्याख्यानयन्ति। हीनवीर्य्यत्वं वीर्य्याल्पतायाः भावं, न तु सर्वथा वीर्य्यराहित्य-

हीनत्वं गुड़िकालेहौ लभेते वत्सरात् परम् ।
हीनाः स्युर्घृततैलाद्याश्चतुर्मासाधिकात् तथा ॥ ५६ ॥
ओषध्यो लघुपाकाः स्युर्निर्वीर्य्या वत्सरात् परम् ।
पुराणाः स्युर्गुणैर्युक्ता आसवा धातवो रसाः ॥ ५७ ॥

हीनाः स्युर्घृततैलाद्या इति, तैलमत्र कटुतैलं, तन्निर्य्यासादितद्रव्य-तैलादि च ज्ञेयं, नान्यत्—

"अब्दादूर्द्ध्वं घृतं पक्वं हीनवीर्य्यत्वमाप्नुयात् ।
तैले विपर्य्ययं विद्यात् पक्वेऽपक्वे विशेषतः ॥" इति वचनात् ।

योगविशेषे गणोक्तद्रव्याणां हेयोपादेयत्वनिर्देशः ।—

व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत् त्यजेत् ।
अनुक्तमपि युक्तं यद्योजयेत् तत्र तत् बुधः ॥ ५८ ॥

[ शार्ङ्गधरेणोक्तम् ]।

---

मिति बोद्धव्यं, भास्करलवणादीनां चूर्णविधविशेषाणां बहुलपरिमाणेन प्रस्तुतविधि-दर्शनात्, न तु तावत्परिमाणं चूर्णं केनाप्येकेन मासद्वयादुपयोक्तुं शक्यते, अतो मासद्वयादूर्द्ध्वं चूर्णानां किञ्चित् वीर्य्यहानिर्भवति, न तु सर्वथा इति सुधीभिर्द्रष्टव्यम् । चतुर्मासाधिकादित्यत्र वर्षादिति शेषः, तेन षोडशमासादनन्तरमित्यर्थः । "चतु-र्मासाधिकात्" इत्यत्र "चतुर्मासाधिकाः" इति पाठान्तरम् । अस्मिन् पाठे केचित् चतुर्मासपदर्शने वर्षाकालं मन्यन्ते, "वर्षास्वामुषितः स्नेहः पक्वः हीनत्वमाप्नुयात्" इति वचनात् । लघुपाका ओषध्यः यवगोधूमादयः, निर्वीर्य्या निःशेषेण वीर्य्यहीनाः, न तु हीनवीर्य्याः, "एतेषु यवगोधूम-तिलमाषा नवा हिताः । रूढाः पुराणा विरसाः न तथा गुणकारिणः ॥" इति वचनात् । "निर्वीर्य्याः" इत्यत्र "न वीर्य्याः" इति पाठे—न वीर्य्यवत्यः इत्यर्थः । आसवा इत्यत्र आसवशब्दः सन्धित-मात्रस्योपलक्षणं, तेन आसवारिष्टसुराऽऽरनालादीनां ग्रहणं बोध्यम् । धातवः सुवर्णादयः, तन्निर्म्मितौषधानीत्यर्थः । रसाः पारदाः, रसोपरसघटितौषधा-नीत्यर्थः ॥ ५२—५७ ॥

व्याधिविशेषे गणोक्तानाम् ओषधीनामग्राह्यत्वे अनुक्तानाञ्च ग्राह्यत्वे परिभाषामाह, व्याधेरिति ।—अयुक्तम् अनुपयोगि ॥ ५८ ॥

अथ प्रशस्तदेशजद्रव्यमाह।—

आग्नेया विन्ध्यशैलाद्याः सौम्यो हिमगिरिर्मतः।
ततस्तान्यौषधानि स्युः प्रशस्तानि क्रियाविधौ ॥ ५९ ॥
अन्येष्वपि प्ररोहन्ति वनेषूपवनेषु च।
गृह्णीयात्तान्यपि भिषक् वने शैले विशेषतः ॥ ६० ॥

अन्येऽप्याहुः।—

धन्वसाधारणे वाऽपि गृह्णीयादुत्तराश्रितम्।
पूर्वाश्रितं वा मतिमानौषधं तद्विचक्षणः ॥ ६१ ॥

अन्यच्च।—

धन्वसाधारणे देशे मृदावुत्तरतः शुचौ।
अवैकृतमनाक्रान्तं सवीर्य्यं ग्राह्यमौषधम् ॥ ६२ ॥

धन्वः देशविशेषः, मरुभूमिजाङ्गलयोः संसृष्टलक्षणो देश इति।

---

व्याधिविशेषे औषधिद्रव्यसङ्ग्रहोपयोगि स्थानमाह, आग्नेया इति।—विन्ध्यशैलाद्या इत्यत्र आदिशब्देन मलयसह्यपारियात्रादीनां ग्रहणम्। अयं भावः,—विन्ध्यादीनामाग्नेयत्वात् सौम्ये व्याधौ तेभ्यो गृहीतान्यौषधानि तथा हिमगिरेः सौम्यत्वादाग्नेये व्याधौ तस्माद्गृहीतानि औषधानि अधिककार्य्यकराणि स्युरिति ॥ ५९।६० ॥

विशेषमुक्त्वा सामान्यत औषधग्रहणस्थानमाह, धन्वेति।—धन्वनि साधारणे वा। अत्र धन्वशब्दो मरुपर्य्यायत्वेऽपि जाङ्गलवाचकः, जाङ्गलस्यापि मरुप्रायत्वात्, यथा च सुश्रुतः, "आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपानोदकप्रायः उष्णदारुणवातः प्रविरलाल्पशैलः स्थिरकृशशरीरमनुष्यप्रायः वातपित्तरोगभूयिष्ठश्च जाङ्गलः" इति। यद्वा—धन्वो देशविशेषः, मरुदेश इति यावत्, तत्र यः साधारणः मरुभूमिजाङ्गलयोः संसृष्टलक्षणः देशः, मरुदेशमध्ये यत्र क्वचित् मरुजाङ्गलयोः संसृष्टलक्षणो भूभागो विद्यते तत्रेत्यर्थः। साधारणस्तु जाङ्गलानूपोभयदेशलक्षणकः; तत्र जाङ्गलोऽभिहितः, आनूपस्तु यथा सुश्रुते "बहूदकनिम्नोन्नतनदीवर्षगहनो मृदुशीतानिलो बहुमहापर्वतवृक्षो मृदुसुकुमारोपचितमनुष्यप्रायः, कफवातरोगभूयिष्ठश्चानूपः" इति; साधारणा भूमिर्यथा सु०—"समलक्षणसम्पन्ना भूमिः साधारणा

अत्र निषेधमाह ।—

देवतालयवल्मीक-कूपरथ्याश्मशानजाः ।
अकालतरुमूलोत्था न्यूनाधिकचिरन्तनाः ॥
जन्तुवह्निक्रिमिमलुष्टा ओषध्यस्तु न सिद्धिदाः ॥ ६३ ॥

अन्यच्च ।—

वल्मीक-कुत्सितानूप-श्मशानोषर-मार्गजाः ।
जन्तु-वह्नि-हिमव्याप्ता नौषध्यः कार्य्यसाधिकाः ॥ ६४ ॥

अथ भूतापसारणः ।—

ओं निवसन्ति हि भूतानि यान्यस्मिन् कानिचित् द्रुमे ।
अपक्रामन्त्वतस्तानि प्रजार्थं पाट्यते द्रुमः ॥ ६५ ॥
ओं वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः ।
ये भूतास्तेऽपसर्पन्तु वृक्षादस्मात् शिवाज्ञया ॥ ६६ ॥

अथोद्धारणमन्त्रः ।—

ओं येन त्वां खनते ब्रह्मा येनेन्द्रो येन केशवः ।
तेनाहं त्वां खनिष्यामि मन्त्रपूतेन पाणिना ॥ ६७ ॥

उद्धारणविधिः ।—

भूतादिमुक्तयेऽभ्यर्च्य सायं प्रातरुदङ्मुखैः ।
आर्द्रकपोषितैर्ग्राह्यं भेषजं कर्मसिद्धवेत् ॥ ६८ ॥

अथ औषधद्रव्याङ्गग्रहणमाह ।—

सारः स्यात् खदिरादीनां निम्बादीनाञ्च वल्कलम् ।
फलन्तु दाडिमादीनां पटोलादेश्छदस्तथा ॥ ६९ ॥

शार्ङ्गधरस्त्वाह ।—

न्यग्रोधादेस्त्वचो ग्राह्याः सारः स्याद्बीजकादितः ।

भूता । द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः ॥" इति । अवैकृतं ग्रंसवलकुमल-
[ ववर्णत्वादिदोषविरहितम् । अनाक्रान्तं क्रिमिवह्निहिमादिभिरनभिहतम् ॥ ६१।६२ ॥

औषधद्रव्यसङ्ग्रहे निषिद्धस्थानादिकमाह, देवतेत्यादि ।—रथ्या मार्गः । अकाल-
तरुमूलोत्थाः अकालसम्भूताः वृक्षान्तरमूलसम्भूताश्च ॥ ६३—६८ ॥

द्रव्याणां कीदृशं किमङ्गं ग्राह्यमित्याह, सार इत्यादि ।—सारः मज्जा । खदिरादी-

तालीशादेश्च पत्राणि फलं स्यात् त्रिफलादितः॥ ७० ॥

न्यग्रोधः वटः।

अन्यच्च।—

महान्ति यानि मूलानि काष्ठगर्भाणि यानि च।
तेषान्तु वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः॥ ७१ ॥

अन्यच्च।—

अतिस्थूलजटा याश्च तासां ग्राह्यास्त्वचो ध्रुवम्।
गृह्णीयात् सूक्ष्ममूलानि सकलान्यपि बुद्धिमान्॥ ७२ ॥
निर्देशः श्रूयते तन्त्रे द्रव्याणां यत्र यादृशः।
तादृशः संविधातव्यः शास्त्राभावे प्रसिद्धितः॥ ७३ ॥

अस्यार्थः,—यत्र यत्र द्रव्येषु अङ्गानामवयवानां यादृशो निर्देशः श्रूयते, तादृश एव ग्राह्यः। यथा अमृतादिपाचने "अमृतवृषपटोलं निम्बपत्रम्" इत्यत्र पत्रमेव ग्राह्यं, न वल्कलं, पत्रस्य कण्ठोक्तत्वात्। अङ्गसामान्योक्तौ मूलस्य वल्कलेनैव व्यवहार इति गुरवः, "अङ्गेऽप्यनुक्ते विहितन्तु मूलम्" इति वचनात्।

नृपादौ औषधप्रयोगे कर्त्तव्यनिर्देशः।—

व्याधिप्रशमने पूर्वं ज्ञापितानि पृथग्जने।
विस्फारितान्यौषधानि पश्चाद्राजनि योजयेत्॥ ७४ ॥

पृथग्जने इति जनान्तरे। विस्फारितानि विशेषेण स्फूर्त्तानि।

तद्यथा—गोपाल-तापस-व्याध-मालाकार-वनेचरान्।
पृष्ट्वा नामानि जानीयात् भेषजानाञ्च शास्त्रतः॥ (ख)

वानित्यत्र आदिशब्देन तालीसनादीनां ग्रहणम्। छदः पत्राणि। जीवकः वियालः। महान्ति स्थूलानि। अतिस्थूलजटा अतिस्थूलमूलानि। तन्त्रे शास्त्रे॥ ६९—७३ ॥

अविज्ञातगुणमौषधं भूपादौ न प्रयोज्यमित्याह, व्याधीति।—ज्ञापितानि वक्ष्यमाणगोपालादिभिर्ज्ञापितनामानि, गोपालादिसन्निधौ नामानि गुणांश्च ज्ञात्वा इत्यर्थः। पृथग्जने प्राकृतमनुष्ये, "विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः" इत्यमरः। विस्फारितानि विशेषेण स्फुरणं गतानि, परीक्षितानीति यावत्॥ ७४ ॥

---

(ख)—शास्त्रतः शास्त्रोक्तं लक्षणाजीवकादीनां लक्षणं दृष्ट्वा इत्यर्थः।

विषयभेदे द्रव्यग्रहणम् ।—

शरद्यखिलकार्मार्थं ग्राह्यं सरसमौषधम् ।
विरेकवमनार्थञ्च वसन्तान्ते समाहरेत् ॥ ७५ ॥

अथ ऋतुभेदे द्रव्याङ्गग्रहणमाह ।—

मूलानि शिशिरे ग्रीष्मे पत्रं वर्षावसन्तयोः ।
त्वक्कन्दौ शरदि क्षीरं यथर्त्तु कुसुमं फलम् ॥
हेमन्ते सारमौषध्या गृह्णीयात् कुशलो भिषक् ॥ ७६ ॥

अस्यार्थः ।—यथर्तु यस्मिन् ऋतौ यत् यत् पुष्पं फलञ्च भवति, तस्मिन्नेव तत्तद्ग्राह्यमित्यर्थः ।

अथ सामान्योक्तौ द्रव्यग्रहणमाह ।—

पात्रोक्तौ चापि मृत्पात्रमुत्पले नीलमुत्पलम् ।
शकृद्रसे गोमयरसश्चन्दने रक्तचन्दनम् ॥ ७७ ॥
सिद्धार्थः सर्षपे ग्राह्यो लवणे सैन्धवं मतम् ।
मूत्रे गोमूत्रमादेयं विशेषो यत्र नेरितः ॥ ७८ ॥
पयः-सर्पिःप्रयोगेषु गव्यमेव प्रशस्यते ।
स्त्रियश्चतुष्पदे ग्राह्याः पुमांसो विहगेषु च ॥ ७९ ॥

मांसग्रहणविधिः ।—

जाङ्गलानां वयःस्थानां चर्मरोमनखादिकम् ।
हित्वा ग्राह्यं पूतमांसं सास्थिकं खण्डशः कृतम् ॥ ८० ॥

---

कर्मविशेषे औषधग्रहणस्य कालविशेषमाह, शरदीति ।—अखिलकार्मार्थे दीपनपाचनशोधनशमनस्तम्भनाद्यर्थमित्यर्थः । सरसम् आर्द्रम् ॥ ७५।७६ ॥

लेशेनोक्ते द्रव्ये तत्प्रकाशार्थं विशेषपरिभाषामाह, पात्रोक्ताविति ।—सिद्धार्थः शुक्लसर्षपः । विशेषो यत्र नेरितः यत्र ताम्रलौहादिपात्रं सौवर्चलादिलवणं माहिषाजादीनां मूत्रमिति विशेषो न उक्तः इत्यर्थः । स्त्रियश्चतुष्पदे ग्राह्याः इति— आविकं मांसमित्याद्युक्तौ पुंमेषादिकं विहाय मेष्यादिकं ग्राह्यमित्यर्थः ॥ ७७—७९ ॥

मांसे गृहीतव्ये कीदृशानां पशूनां पक्षिणाञ्च मांसं कीदृग्विधिना ग्राह्यमित्याह, जाङ्गलानामिति ।—जाङ्गलानां जाङ्गलदेशजानां, वयःस्थानां तरुणानाम् ॥ ८० ॥

घृततैलयोः छागग्रहणविधिः।—

पञ्चाब्दमाजमांसञ्च विधिना घृततैलयोः।
छित्वा स्त्रीं पुरुषञ्चापि क्लीवं तत्रापि दापयेत् ॥ ८१ ॥
बलिनञ्च वयःस्थञ्च सुवीर्य्यञ्च सुदेहिनम्।
न वृद्धञ्च न बालञ्च अवीर्य्यं स्रावशोणितम् ॥ ८२ ॥

एतद्धेतुगर्भविशेषणम्। (ग) असन्धिस्तु छान्दसः। अथवा न वीर्य्यम-वीर्य्यम्, अल्पार्थे नञ्, तेनाल्पशुक्रम्; अत एव काशीराजाभिप्रायेण नपुंसकस्य विधिना सूचितमेव, शरीरारम्भकत्वादल्पवीर्य्यत्वं वीर्य्यमस्त्येव इत्यर्थः। अतः स्रावशोणितायाः छाग्यास्त्वनुपयोगित्वम्, अर्थादस्राव-शोणितायाः ग्राह्यत्वम् इत्यर्थः। स्त्रीप्रकृत्या वन्ध्याच्छाग्याः अस्राव-शोणितत्वमस्त्येव, तस्मात् वन्ध्या छाग्यपि योज्या इति नपुंसकाभावा-दनुशासनात्।

चतुष्पदेषु शृगालस्य विशेषनिर्देशः।—

शृगालबर्हिणोः पाके पुमांसं तत्र दापयेत्।
मयूरो जम्बुको छागो वीर्य्यहीनाः स्वभावतः ॥ ८३ ॥

छागग्रहणे वृद्धवैद्यव्यवहारः।—

काशीराजमतेनैव छागमेव नपुंसकम्।
अभावादप्रतीत्वाद्वा वृद्धवैद्योपदेशतः ॥
वन्ध्या छागी त्रिपक्षाख्या न तु शास्त्रमतं चरेत् ॥ ८४ ॥

स्त्रियश्चतुष्पदे ग्राह्या इत्यस्यापवादमाह, पञ्चाब्दमिति।—विधिना यथाशास्त्रम्। सुवीर्य्यं पूर्णवीर्य्यम्। सुदेहिनं परिपुष्टदेहं, न तु कृशमित्यर्थः। स्रावशोणितं स्रवद्रक्तम्। "स्रावशोणितम्" इत्यत्र "स्रवच्छोणितम्" इति पाठो युक्तः। "अवीर्य्यं स्रावशोणितम्" इत्यत्र "न स्रवद्दोजशोणितम्" इति पाठान्तरम् ॥ ८१।८२॥

स्त्रियश्चतुष्पदे ग्राह्या इत्यस्याः परिभाषायाः शृगाले व्यभिचारं प्रदर्शयति, शृगालेत्यादि।—बर्ही मयूरः। जम्बुको शृगालः ॥ ८३ ॥

नपुंसकच्छागग्रहणविषये वृद्धवैद्यमतमाह, काशीराजेति।—अप्रतीत्वात् प्रकृ-त्यादौ नपुंसकान्वेषणाय कालविलम्बस्य वाऽनुपशक्यत्वात् इत्यर्थः ॥ ८४ ॥

(ग) एतदिति।—एतत् बलिनमित्यादिकं, हेतुगर्भविशेषणं, वीर्य्यादिवृद्धये छागयुवकानां प्रशस्तत्वादिति भावः।

अभावात् इति नपुंसकस्य अलाभात्। अथवा नपुंसकस्य वीर्य्याभावात् वीर्य्यमस्ति न वेति काकुरित्यत्र। अप्रतीच्छाद्या, शास्त्रमिति शासनम् आज्ञा, काशीराजमतेनेवेत्यादिरूपेण। केचित्तु कृत्रिमनपुंसकमपि ददति, तदसत्; स तु प्रज्ञया च पुरुष एव। ननु वन्ध्याया नपुंसकस्य च छागस्य अपत्यजनकत्वं नास्ति, तत्कथमपत्यकामिनः प्रवर्त्तन्ते छागलादिघृतादिषु कदाचित् क्रियासिद्धेरभावः स्यात्? अतश्चिन्त्यम्।

मूत्रादिग्रहणे नियमनिर्देशः।—

स्त्रीणां मूत्रं गवां तीक्ष्णं न तु पुंसां विधीयते।
पित्तात्मिकाः स्त्रियो यस्मात् सौम्यास्तु पुरुषा मताः॥८५॥
क्षीरमूत्रपुरीषाणि जीर्णाहारे तु संहरेत्॥ ८६॥

अथानुक्ते द्रव्यग्रहणम्।—

कालेऽनुक्ते प्रभातं स्यादङ्गेऽनुक्ते जटा भवेत्।
भागेऽनुक्ते तु साम्यं स्यात् पात्रेऽनुक्ते तु मृन्मयम्॥
द्रवेऽनुक्ते जलं विद्यात् सर्वत्रैष विनिश्चयः॥ ८७॥

अथाभावे द्रव्यग्रहणम्।—

मधु यत्र न विद्येत तत्र जीर्णो गुडो मतः।
पुरातनगुडाभावे रौद्रे यामचतुष्टयम्॥ ८८॥
संशुष्य नूतनं ग्राह्यं पुरातनगुडैषणा।
क्षीराभावे भवेन्मुद्गो रसो मासूर एव वा॥ ८९॥
सिताऽभावे च खण्डः स्यात् शाल्यभावे च षष्टिकः।
असम्भवे च द्राक्षाया गाम्भारीफलमिष्यते॥ ९०॥

प्रयोगे पुन्नातोऽर्गोमूत्रस्य ग्रहणमस्तत्वादिकमाह, स्त्रीणामित्यादि।—सौम्याः कफात्मिकाः। जीर्णाहारे प्रभाते॥ ८५।८६॥

अनुक्तस्थले तत्तत्कार्यार्थे विशेषग्रहणमाह, काले इत्यादि।—जटा मूलम्। द्रवेऽनुक्ते स्नेहादिपाकार्थं स्वरसक्वाथादिद्रवपदार्थस्यानुक्तत्वे॥ ८७॥

द्रव्यविशेषस्याभावे तत्तत्कार्ये ग्राह्यं द्रव्यान्तरमाह, मध्विति।—जीर्णः

न भवेद्दाडिमो यत्र वृक्षाम्लं तत्र दापयेत्।
सौराष्ट्र्यभावे च ग्राह्या पङ्कस्य पर्पटी ॥ ९१ ॥
नतं तगरमूलं स्यादभावे शिवलीजटा।
प्रयोगे यत्र लौहं स्यादभावे तन्मलं विदुः ॥ ९२ ॥
सर्षपः शुक्लवर्णो यः स हि सिद्धार्थ उच्यते।
तत्र सिद्धार्थकाभावे सामान्यः सर्षपो मतः ॥ ९३ ॥
चविकागजपिप्पल्योः पिप्पलीमूलमेव च।
अभावे पिप्पलीमूलं हस्तिपिप्पलीचव्ययोः ॥ ९४ ॥

पाठान्तरमेतत् न पुनरुक्तदोषः।

अभावे पृश्निपर्ण्याश्च सिंहपुच्छी विधीयते।

सिंहपुच्छी शालपर्णी।

नित्यं मुञ्जातकाभावे तालमस्तकमिष्यते ॥ ९५ ॥

तालसदृशवृक्षः, स च देशान्तरे ख्यातः, "माञ्जफलम्" इति केचित्।

कुङ्कुमस्याप्यभावेऽपि निशा ग्राह्या भिषग्वरैः।
मुक्ताऽभावे शङ्खचूर्णं वज्राभावे वराटिका ॥ ९६ ॥

---

वत्सराधिकः पुरातनः। मौद्गो रसः मुद्गयूषः। वृक्षाम्लं महार्द्रकं तिन्तिडीकं वा। पङ्कस्य पर्पटी कर्दमे शुष्के तदुपरिस्थः पर्पटीवत् पदार्थविशेषः, "पाँकेर चटा" इति प्रसिद्धः, सौराष्ट्र्यभावे स्फटिकारिकामपि व्यवहरन्ति वृद्धाः। शिवलीजटा "शिउलीकोप" इति ख्यातः मलकोद्भिद्विशेषः। तन्मलं लौहमलं, मण्डूरमित्यर्थः। मुञ्जातकम् "औत्तरापथिकः फलविशेषः" इति शिवदासः, "पुष्पशाकभेदः" इति राजवल्लभः। तालमस्तकं तालवृक्षस्य मस्तकस्थ-मज्जा "तालमाथि" इति वङ्गे प्रसिद्धम्। यथा मुञ्जातकाभावे तालमस्तकस्य ग्राह्यत्वम्, एवं युञ्जातकाभावेऽपि; तथा हि चक्रसङ्ग्रहे अपस्मारचिकित्सायां "नित्यं युञ्जातकाभावे तालमस्तकमिष्यते"। अस्य व्याख्यायां "युञ्जातम् औत्तरापथिकः कन्दः, तदभावे तालमस्तकम्" इति शिवदासः। चक्र-शिवदासयोर्विवृतिदर्शनात् एवं प्रतीतिर्भवति यत् मुञ्जातकं युञ्जातकमभिन्नमेव द्रव्यं, पाठभेदमात्रमिति। निशा हरिद्रा। "शङ्खचूर्णम्" इत्यत्र "शुक्तिचूर्णम्" इति

कर्कटशृङ्गिकाभावे मायाम्बु नेष्यते बुधैः।
धान्यकाभावतो दद्यात् शतपुष्पां भिषग्वरः॥ ९७॥
वाराहीकन्दकाभावे चर्मकारालुको मतः।
मूर्वाऽभावे त्वचो ग्राह्या जिङ्गिन्या बुवते सदा॥ ९८॥
अभावात् पौष्करे मूले कुष्ठं सर्वत्र गृह्यते।
सामुद्रं सैन्धवाभावे विडं वा गृह्यते बुधैः॥ ९९॥
कुस्तुम्बुरु न विद्येत यत्र तत्र च धान्यकम्।
पुष्पाभावे फलं ग्राह्यं विड्भेदे बिल्वजः फलम्॥ १००॥
भल्लातकासहत्वे तु रक्तचन्दनमिष्यते।
भल्लाताभावतश्चित्रं नलश्चेचोरभावतः॥ १०१॥
मद्याभावे च शिण्डाकी शुक्ताभावे च काञ्जिकम्।

---

पाठान्तरम्। वज्राभावे हीरकाभावे। "वज्रे वैकान्तमिष्यते" इत्यपि पाठो दृश्यते। मायाम्बु कालिन्दकलं, "तरमुज" इति भाषा। "कर्कटशृङ्गिकाभावे मायाम्बुनीशमिष्यते" इति पाठान्तरम्। शतपुष्पा "शलुफा" इति ख्यातम्। वाराहीकन्दः चर्मकारालुकः, वराहलोमवत् लोमशान् कन्दविशेषः, यदुक्तं चक्रपाणिना नारसिंहचूर्णे वाराहीकन्दविवरणे—"वाराहीकन्दसंज्ञस्तु चर्मकारालुको मतः। पाश्चात्ये घृष्टिशब्दाख्यो वराहलोमवानिव॥" इति। तादृशलक्षणकवाराहीकन्दकाभावे केवलचर्मकारालुको ग्राह्यः, उक्तञ्च शिवदासेन—"वाराहीकन्दस्य दुर्लभतया चर्मकारालुकमेव गौडीयैर्वाराहीकन्दसंज्ञया गृह्यते" इति। जिङ्गिनी मञ्जिष्ठायाः। पौष्करं मूलं काश्मीरदेशजः पद्मपत्राकारपत्रविशिष्टः जलजः कन्दविशेषः। सामुद्रं "करकच" इति प्रसिद्धम्। आमम् अपक्वम्। विड्भेदे अतीसाररोगे। "विड्भेदे बिल्वतः फलम्" इत्यत्र "शुक्ताभावे तु काञ्जिकम्" इत पाठान्तरम्। विड्भेदे बिल्वजः फलम् इत्यनेन विड्भेदादन्यत्र बिल्वनो मूलं ग्राह्यमित्यर्थादायातम्। शिण्डाकी—"शिण्डाकी राजिकायुक्तैः स्यान्मूलकशकलद्रवैः। सर्षपैर्वर्त्तितैर्वाऽपि शालिपिष्टकसंयुतैः॥" इति लक्षणलक्षितः सन्धानविशेषः। शुक्तं—"कन्दमूलफलादीनि सस्नेहलवणानि च। यत्र द्रवेऽभिषूयन्ते तच्छुक्तमभिधीयते॥" इति कल्पमात्रलक्षणलक्षितम्।

यष्ट्याह्वाभावतो विद्याच्चव्यं तस्याप्यभावतः ॥ १०२ ॥
मूलं मौषलिकं देयमभावे कुटजस्य च ।
रास्नाऽभावे च वन्दाकं जीराभावे च धान्यकम् १०३ ॥
तुम्बुरूणामभावेऽपि शालिधान्यं प्रकीर्त्तितम् ।
रसाञ्जनस्य चाप्राप्तौ दार्वीक्वाथं प्रयोजयेत् ॥ १०४ ॥
कर्पूरस्याप्यभावेऽपि सुगन्धं मुस्तमिष्यते ।
कस्तूरीणामभावे तु ग्राह्या गन्धशटी बुधैः ॥ १०५ ॥
अभावे कोकिलाक्षस्य गोक्षुरवीजमिष्यते ।
ऋद्ध्यभावे बला ग्राह्या वृद्ध्यभावे महाबला ॥ १०६ ॥
मेदाभावे चाश्वगन्धा महामेदे च शारिवा ।
जीवकर्षभकाभावे गुडूची-वंशलोचने ॥ १०७ ॥
काकोली-युगलाभावे निक्षिपेच्च शतावरीम् ।
चित्रकाभावतो दन्ती-क्षारः शिखरिजोऽथवा ॥ १०८ ॥
अभावे धन्वयासस्य प्रक्षेप्या तु दुरालभा ।
अहिंस्राया अभावे तु मानकन्दः प्रकीर्त्तितः ॥ १०९ ॥
लक्ष्मणाया अभावे तु नीलकण्ठ-शिखा मता ।
वकुलाभावतो देयं कह्लारोत्पल-पङ्कजम् ॥ ११० ॥

"शुक्ताभावे च काञ्जिकम्" इत्यत्र "क्षाग्यभावे नपुंसकम्" इति पाठान्तरम्। यष्ट्याह्वेत्यादितः कुटजस्येत्यन्तेन एकैव परिभाषा, यष्टिमधुनः अभावे एव चव्यादिकं देयमित्यर्थः। मौषलिकं मूलं तालमूलीमूलम्। यद्वा—यष्ट्याह्वाभावात् चव्यं, चव्यस्यापि अभावे यष्टिमधुप्रतिनिधित्वे मौषलिकं मूलं, तथा कुटजस्याभावेऽपि मौषलं मूलं देयमित्यर्थः। "मूलं मौषलिकम्" इत्यत्र "मूलमौषधिकम्" इति पाठान्तरे—औषधिकं मूलं पिप्पलीमूलम्। तुम्बुरुः धनामख्यातवणिग्द्रव्यविशेषः। दार्वीक्वाथं दारुहरिद्राक्वाथम्। कोकिलाक्षः "कुलेखाड़ा" इति वङ्गे "तालमखना" इति पश्चिमप्रदेशे च ख्यातम्। शारिवा अनन्तमूलम्। शिखरिजः अपामार्गमूलजः, क्षार इति शेषः। धन्वयासो दुरालभाभेदः। अहिंस्रा "केलेकाँड़ा" इति ख्यातम्। नीलकण्ठशिखा नीलकण्ठाख्य-

नीलोत्पलस्याभावे तु कुमुदं देयमिष्यते।
जातीपुष्पं न यत्रास्ति लवङ्गं तत्र दीयते॥ १११॥
अर्कपर्णादि-पयसो ह्यभावे तद्रसो मतः।
पौष्कराभावतः कुष्ठं तथा लाङ्गल्यभावतः॥ ११२॥
स्थौणेयकस्याभावे तु भिषग्भिर्दीयते नदः।
कुङ्कुमाभावतो दद्यात् कुसुम्भकुसुमं नवम्॥ ११३॥
श्रीखण्डचन्दनाभावे कर्पूरं देयमिष्यते।
अभावे त्वेतयोर्वैद्यः प्रक्षिपेद्रक्तचन्दनम्॥ ११४॥
रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः।
मुस्ता चातिविषाऽभावे शिवाऽभावे शिवा मता॥ ११५॥
अभावे नागपुष्पस्य पद्मकेशरमिष्यते।
मेदाजीवककाकोली-ऋद्धिद्वन्द्वेऽपि चासति॥ ११६॥
वरी विदार्य्यश्वगन्धा वाराही च क्रमात् क्षिपेत्।
सुवर्णाभावतः स्वर्ण-माक्षिकं प्रक्षिपेत् बुधः॥ ११७॥
श्वेतं तु माक्षिकं ज्ञेयं बुधैः रजतवत् ध्रुवम्।
माक्षिकस्याप्यभावे तु प्रदद्यात् स्वर्णगैरिकम्॥ ११८॥
सुवर्णमथवा रौप्यं मृतं यत्र न लभ्यते।

वृक्षस्य शिखा अग्रभागः, सा च मञ्जरीवद्गुम्फिता भवतीति ज्ञातव्यम्। जातीपुष्पं "जायिती" इति ख्यातम्। अर्कपर्णादिपयसः अर्कपर्णः अर्कवृक्षः, "अर्काह्ववसुकास्फोत-गणरूपविकीरणाः। मन्दारश्चार्कपर्णो" इत्यमरः, तदादिपयसः अर्कादिक्षीरस्य, आदिपदेन सुह्यादीनां ग्रहणम्। तद्रसः अर्कमूलरसः। लाङ्गली "ईषलाङ्गला" इति ख्यातं, तदभावे कुष्ठम्। स्थौणेयकं ग्रन्थिपर्णं, "गेँठेला" इति ख्यातम्। नदः कुष्ठम्। श्रीखण्डचन्दनं श्वेतचन्दनम्। शिवाऽभावे शिवा मता हरीतक्यभावे आमलकी देया। नागपुष्पस्य नागकेशरपुष्पस्य। मेदादीनां द्वन्द्वे युग्मे, "द्वन्द्वात् परः श्रूयमाणशब्दः प्रत्येकमभिसम्बध्यते" इति नियमात् द्वन्द्वशब्दः मेदादीनां प्रत्येकमन्वेतव्यः। वरी शतावरी। वाराही वाराहीकन्दः। "श्वेतन्तु माक्षिकं ज्ञेयं बुधैः रजतवत् ध्रुवम्" इति

तत्र कान्तेन कर्माणि भिषक् कुर्याद्विचक्षणः ॥ ११९ ॥
कान्ताभावे तीक्ष्णलौहं योजयेद्वैद्यसत्तमः ।
मत्स्यण्डग्रभावतो दद्युर्भिषजः सितशर्कराम् ॥ १२० ॥
असम्भवे सितायास्तु बुधैः खण्डं प्रयुज्यते ।
सौराष्ट्र्यभावतो देया स्फटिका तद्गुणा जनैः ॥ १२१ ॥
तालीश-पत्रकाभावे स्वर्णताली प्रशस्यते ।
भार्ग्यभावे तु तालीशं कण्टकारीजटाऽथवा ॥ १२२ ॥
रुचकाभावतो दद्यात् लवणं पांशुपूर्वकम् ।
अभावे मधुयष्ट्यास्तु धातकीञ्च प्रयोजयेत् ॥ १२३ ॥
अम्लवेतसकाभावे चुक्रं दातव्यमिष्यते ।
द्राक्षा यदि न लभ्येत प्रदेयं काश्मरीफलम् ॥ १२४ ॥
तयोरभावे कुसुमं बन्धूकस्य मतं बुधैः ।
लवङ्गकुसुमं देयं नखस्याभावतः पुनः ॥ १२५ ॥
कस्तूर्य्यभावे कक्कोलं लेपणीयं विदुर्बुधाः ।
कक्कोलस्याप्यभावे तु जातीपुष्पं प्रदीयते ॥ १२६ ॥
सुगन्धि मुस्तकं देयं कर्पूराभावतो बुधैः ।
कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः ॥
यदि न स्यात् दारुनिशा तदा देया निशा बुधैः ॥ १२७ ॥
यत्र यद्द्रव्यमप्राप्तं भेषजे परपूर्वतः ।
ग्राह्यं तद्गुणसास्यात् तु न तत्र क्वापि दूषणम् ॥ १२८ ॥
अन्यानि यानीह रसायनादौ योगे च वस्तूनि च कीर्त्तितानि ।
तेषामलाभेन च वृद्धवैद्य-प्रसिद्धितस्तानि हरन्ति वैद्याः ॥१२९॥

---

रौप्याभावात रौप्यमाक्षिकं देयं गुणसाम्यात । कान्तेन कान्तलौहेन । रुचकं सौवर्चलाख्य लवणम् । लवणं पांशुपूर्वकं पांशुलवणं, "पाङ्गा लवण" इति ख्यातम् । चुक्रं इत्यम्लम । काश्मरीफल गाम्भारीफलम । नखस्य नखीनामकगन्धद्रव्यस्य । ग्रन्थिपर्णं "गँठेला" इति ख्यातम् ॥ ८८—१२९ ॥

अजमोदाप्रयोगे विशेषविधिः।—

अन्तःसम्मार्जने ज्ञेया ह्यजमोदा यमानिका।
बहिःसम्मार्जने सैव विज्ञातव्याऽजमोदिका॥ १३०॥

प्रतिनिधिपदस्य विशेषस्थलनिर्देशः।—

योगे यदप्रधानं स्यात् तस्य प्रतिनिधिर्मतः।
यत्तु प्रधानं तस्यापि सदृशं नैव गृह्यते॥ १३१॥

इति परिभाषाप्रदीपे प्रथमः खण्डः।

---

## द्वितीयः खण्डः।

पञ्चविधकषायमाह।—

स्वो रसः स्वरसः प्रोक्तः कल्को दृषदि पेषितः।
क्वथितस्तु शृतः शीतः शर्वरीमुषितो मतः॥ १॥
चिह्नोष्णतोये मृदितः फाण्ट इत्यभिधीयते।
पञ्चैताश्च समुद्दिष्टाः कषायाणां प्रकल्पनाः॥
गुरवः स्युर्यथापूर्वं लघवः स्युर्यथोत्तरम्॥ २॥

---

प्रयोगभेदे अजमोदाशब्देन ग्राह्यद्रव्यविशेषमाह, अन्तरिति।—अन्तःसम्मार्जने कोष्ठशोधनार्थमाभ्यन्तरिकप्रयोगे इत्यर्थः। बहिःसम्मार्जने त्वगादिदुष्टिशोधनाय बाह्यप्रयोगे इत्यर्थः॥ १३०।१३१॥

इति परिभाषाप्रदीपे प्रथमखण्डव्याख्या समाप्ता।

---

अथ स्वरसादीनां द्रव्याधीनत्वात् भेषजद्रव्याणाञ्च मानापेक्षितत्वात् आदौ मानसूत्रं ततो द्रव्यग्रहणविधानानि च प्रदर्श्य प्रयोगार्थं पञ्चविधं कषायमाह, स्व इति।—स्वः निजः। दृषदि पाषाणे। क्वथितः अग्नौ पक्वः। शर्वरीमुषितः निशोषितः। मृदितः मर्दितः॥ १। २॥

विश्वामित्रेण शीतफाण्टयोर्लक्षणमुक्तं, तद्यथा।—

षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयोः।
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम्॥ ३॥

अन्येऽप्याहुः।—

अथ स्वरसकल्कौ तु शृतश्च शीतफाण्टकौ।
ज्ञेयाः कषायाः पञ्चैते गुरवः पूर्वपूर्वतः॥ ४॥

स्वरसमाह।—

सद्यः क्षुण्णाद्रद्रव्यस्य वस्त्रयन्त्रादिपीडनात्।
यो रसस्त्वभिनिर्य्याति स्वरसः स प्रकीर्त्तितः॥ ५॥

अन्यच्च।—

आहृत्य तत्क्षणाकृष्टात् क्षुण्णात् द्रव्यात् समुद्धरेत्।
वस्त्रनिष्पीडितो यस्तु स्वरसो रस उच्यते॥ ६॥

स्वरसाभावे तदनुकल्पविधिः।—

शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम्॥ ७॥

अन्यच्च।—

आदाय शुष्कं द्रव्यं वा स्वरसानामसम्भवे।
जलेऽष्टगुणिते साध्यं पादशिष्टन्तु गृह्यते॥ ८॥

मतान्तरम्।—

कुडवं चूर्णितं द्रव्यं क्षिप्तं तद्द्विगुणे जले।
अहोरात्रं स्थितं तस्मात् भवेद्वा रस उत्तमः॥ ९॥

शीतफाण्टयोः जलभेषजयोः परिमाणमाह, षड्भिरिति।—रसाख्यायां स्वरसाभावात तदनुकल्पे, पलद्वयं भेषजपलद्वय, चतुःपले जले आप्लुतं कर्त्तव्यमिति शेषः; तथाचान्यत्र—"द्विपलं भेषजस्याथ दत्वा नालचतुःपले। मर्दयेत्तेन निर्य्यासो यः स्यात् स्वरस उच्यते॥" इति॥ ३। ४॥

स्वरसस्य लक्षणमाह, सद्य इति।—सद्यः तत्क्षणम्, उद्धारक्षणे एवेत्यर्थः॥ ५। ६॥

स्वरसाप्राप्तौ तदनुकल्पमाह, शुष्केत्यादि।—रसः स्वरस इत्यर्थः॥ ७—९॥

अथ पानमात्रामाह।—

स्वरसस्य गुरुत्वाच्च पलमर्द्धं प्रयोजयेत्।
निशोषितञ्चाग्निसिद्धं पलमात्रं रसं पिबेत्॥ १०॥

स्वरसभेदात् पुटपाकविधिमाह।—

पुटे पक्वस्य द्रव्यस्य स्वरसो गृह्यते यतः।
अतोऽयं पुटपाकः स्यात् विधानं तस्य कथ्यते॥ ११॥
द्रव्यमापोथितं जम्बू-वटपत्रादिसम्पुटे।
वेष्टयित्वा ततो बद्ध्वा दृढं रज्ज्वादिना तथा॥ १२॥
मृल्लेपं द्व्यङ्गुलं कुर्य्यादथवाऽङ्गुलिमात्रकम्।
दहेत् पुटान्तरादग्नौ यावल्लेपस्य रक्तता॥ १३॥

अन्यच्च।—

पुटपक्वस्य कल्कस्य स्वरसो गृह्यते यतः।
अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया॥ १४॥
पुटपाकस्य मात्रेयं लेपस्यारुणवर्णता।
लेपश्च द्व्यङ्गुलं स्थूलं कुर्य्याद्वाऽङ्गुलिमात्रकम्॥
काश्मरीवटजम्ब्वादि-पत्रैर्वेष्टनमुत्तमम्॥ १५॥

स्वरसस्य मात्रामाह, स्वरसस्येति।—गुरुत्वात् गुरुपाकित्वात्; स्वरसस्य गुरुत्वञ्च "गुरुश्च स्वरसः पूर्वं ततः स्युर्यथोत्तरम्" इत्यनेन प्रागेव प्रदर्शितम्। निशोषितं रात्रिपर्य्युषितं, "द्विपलं भेषजस्यात्र" तथा "कुडवं चूर्णितं द्रव्यम्" इत्येताभ्यां प्रागुक्तम् अनुकल्पभूतम्। शीतकषायेण सह अस्यायं भेदो ज्ञातव्यः,—शीतकषाये भेषजस्य पलमानता जलस्य च षट्पलता, अत्र तु जलभेषजयोर्मानवैपरीत्यमिति। अग्निसिद्ध "शुष्कद्रव्यमुपादाय" इत्यादिना प्रदर्शितानुकल्परूपमित्यर्थः। "निःशेषित-श्चापि सिद्धम्" इति पाठान्तरमसाधु। रसं स्वरसानुकल्पमित्यर्थः॥ १०॥

पुटपक्वस्वरसमाह, पुटे इति।—पुटे पात्रविशेषे। आपोथितं कुट्टितम्। लेपस्य उपरिस्थमृल्लेपस्य। "मात्रेयम्" इत्यत्र "पाकोऽयम्" इति पाठान्तरं साधु। काश्मरी गाम्भारी॥ ११—१५॥

कल्कमाह ।—

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा जलमिश्रितम् ।
तदेव सूरिभिः पूर्वैः कल्क इत्यभिधीयते ॥
आवापस्त्वथ प्रक्षेपस्तस्य पर्य्याय उच्यते ॥ १६ ॥

अन्यच्च ।—

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् ।
प्रक्षेपावापकल्कास्ते तन्मानं कर्षसम्मितम् ॥ १७ ॥

कल्कालोडनार्थं मध्वादीनां मात्रानिर्देशः ।—

कल्के मधु घृतं तैलं देयं द्विगुणमात्रया ।
सितां गुडं समं दद्यात् द्रवा देयाश्चतुर्गुणाः ॥ १८ ॥

कल्कस्यैवभेदाच्चूर्णमाह ।—

अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् ।
चूर्णं तच्च रजः क्षोदस्तस्य पर्य्याय उच्यते ॥ १९ ॥

अथ क्वाथमाह शार्ङ्गधरः ।—

पानीयं षोड़शगुणं क्षुसे द्रव्यपले क्षिपेत् ।
मृत्पात्रे क्वाथयेत् ग्राह्यमष्टमांशावशेषितम् ॥ २० ॥

---

कल्कमाह, द्रव्येति ।—"द्रव्यमार्द्रम्" इत्यत्र "द्रव्यमात्रम्" इति पाठान्तरं न सम्यक् ॥ १६।१७ ॥

अथ सेवनीये कल्के मध्वादीनां मानमाह, कल्के इति ।—कल्के "यत् पिण्डं रसपिष्टानां कल्कः स परिकीर्त्तितः" इत्यादिरूपे, तथा कल्कभेदचूर्णेऽपीत्यर्थः, लेढ़व्ये इति यावत्, द्विगुणमात्रया कल्कस्य कर्ष-मानत्वात् कर्षद्वयमात्रया इत्यर्थः, "कर्षश्चूर्णस्य कल्कस्य गुड़िकानाञ्च सर्वशः । द्रवशुक्त्या स लेढ़व्यः पातव्यश्च चतुर्द्रवः ॥" इति परिभाषाबलात् मध्वादिना लेढ़व्ये कल्के इति बोध्यम् । सितां गुडं समं दद्यात् इति "चूर्णे चूर्णसमो ज्ञेयः मोदके द्विगुणो गुड़ः" इति परिभाषाबलात् । द्रवाः मध्वादित्रयव्यतिरिक्ताः क्वाथस्वरसादिरूपाः इत्यर्थः, यस्मिन् पक्षे कल्के पातव्ये कल्के इत्यर्थः, "पातव्यश्च चतुर्द्रवः" इति शास्त्रात् इति ॥ १८।१९ ॥

क्वाथविधिमाह, पानीयमिति ।—षोड़शगुणं क्वाथ्यपलापेक्षया इत्यर्थः, "कर्षादौ

तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम्।
शृतः क्वाथः कषायश्च निर्य्यूहः स निगद्यते ॥ २१ ॥

अन्यच्च।—

द्रव्यादापोथितात्तोये वह्निना परिपाचितात्।
निःसृतो यो रसः पूतः स शृतः समुदाहृतः ॥
क्वाथः कषायो निर्य्यूहः पर्य्यायस्तस्य कीर्त्तितः ॥ २२ ॥

पानीयक्वाथस्य पानकाल-मात्रानिर्देशः।—

आहाररसपाके च सञ्जाते द्विपलोन्मितम्।
वृद्धवैद्योपदेशेन पिबेत् क्वाथं सुपाचितम् ॥ २३ ॥

क्वाथे दोषभेदात् प्रक्षेप्यसितामधुनोः मात्रानिर्देशः।—

क्वाथे क्षिपेत् सितामंशैश्चतुरष्टकषोडशैः।
वातपित्तकफातङ्के विपरीतं मधु स्मृतम् ॥ २४ ॥

---

तु पलं यावत् दद्यात् षोडशिकं जलम्" इति नियमात्, एतत्तु उत्तमबलानल-पुरुषापेक्षया बोद्धव्यम, "उत्तमस्य पल मात्रा त्रिभिश्चाक्षैश्च मध्यमे। जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ॥" इति नियमात्। वर्त्तमानव्यवहारिकी मात्रा तु कर्षसम्मिता ज्ञेया, "दशरक्तिकमानेन गृहीत्वा तोलकद्वयम्। दत्त्वाऽम्भः षोडशगुणं ग्राह्यं पादावशेषितम् ॥" इति वचनात्। अष्टमांशावशेषितमिति चात्यन्तकठिन-द्रव्यापेक्षया बोद्धव्यम ॥ २०।२१ ॥

क्वाथविधौ मतान्तरमाह, द्रव्यादित्यादि।—अत्र जलभेषजयोर्मानेऽनुक्तेऽपि "दशरक्तिकमानेन गृहीत्वा तोलकद्वयम्। दत्त्वाऽम्भः षोडशगुणं ग्राह्यं पादाव-शेषितम् ॥" इति "द्रव्यमापोथितं कृत्वा कर्षादिकपलान्ततः। जले षोडशिके पक्वा क्वाथः स्यात् पादशेषितः ॥" इति वा परिभाषानुसारेण तयोर्मानं ग्राह्यमिति ॥ २२ ॥

पानीयक्वाथस्य पानकालं मात्राञ्च निर्दिशति, आहारेति।—आहाररसपाके च सञ्जाते प्रभाते इत्यर्थः ॥ २३ ॥

क्वाथे प्रक्षिप्यमाणयोः शर्करामधुनोर्मानमाह, क्वाथे इति।—अयमर्थः,—क्वाथे शर्कराप्रक्षेपे कर्त्तव्ये वातजनितरोगे क्वाथ्यात् चतुर्थांशा, पित्तरोगे अष्टमांशा, कफरोगे

शीतमाह।—

क्षुसं द्रव्यपलं सम्यक् षड्भिर्जलपलैः प्लुतम्।
शर्वरीमुषितं सम्यक् ज्ञेयः शीतकषायकः॥ २५॥

अवान्तरभेदात् तण्डुलोदकमाह।—

तण्डुलं कण्डशः कृत्वा पलं ग्राह्यं हि तण्डुलात्।
चतुर्गुणं जलं देयं तण्डुलोदककर्मणि॥ २६॥

अन्येऽप्याहुः।—

शीतकषायमानेन तण्डुलोदककल्पना॥ २७॥

अथ फाण्टमाह।—

क्षुसे द्रव्यपले सम्यग्जलमुष्णं विनिक्षिपेत्।
पात्रे चतुःपलमितं ततस्तु स्रावयेज्जलम्॥
सोऽयं पूतो द्रवः फाण्टो भिषग्भिरभिधीयते॥ २८॥

प्रसङ्गादुष्णोदकमाह।—

अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा।
अथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत्॥ २९॥

---

च षोडशांशा शर्करा दातव्या, मधु च वाते षोडशांशं, पित्ते अष्टमांशं, कफे च चतुरंशं प्रक्षेप्यम् इति॥ २४॥

शीतकषायविधिमाह, क्षुसमिति।—शर्वरीमुषितं निशापर्य्युषितम्॥ २५॥

शीतकषायभेदं तण्डुलोदकमाह, तण्डुलमिति।—चतुर्गुणमित्यत्र अष्टगुणमपि मतान्तरे देयम्; तथा च—"कण्डितं तण्डुलपलं जले त्वष्टगुणे क्षिपेत्। धौतं कृत्वा जलं तच्च तण्डुलोदकमुच्यते॥ शालितण्डुलपानीयं ज्ञेयं ज्येष्ठाऽम्बुसंज्ञितम्॥" इति। शीतेति।—शीतकषायमानेन "क्षुसं द्रव्यपलम्" इत्याद्युक्तपरिमाणेनेत्यर्थः॥ २६।२७॥

फाण्टकषायमाह, क्षुसे इति।—पात्रे मृत्पात्रे भेषजपलं चतुष्पले उष्णजले प्रक्षिप्य प्रगाढं मर्दयित्वा आवृत्य च दण्डद्वयं त्रयं वा स्थाप्यं, ततो वस्त्रेण विस्राव्य ग्राह्यम् इति॥ २८॥

उष्णोदकविधिमाह, अष्टमेनेति।—क्वथनेनैव किञ्चित् पाकेनेवेत्यर्थः॥ २९॥

क्वाथादेरवान्तरभेदाल्लेहादिकमाह ।—

क्वाथादेर्यत् पुनः पाकात् घनत्वं सा रसक्रिया ।
अवलेहश्च लेहश्च प्राश इत्युच्यते बुधैः ॥ ३० ॥

वटकादिनामभेदे कारणनिर्देशः ।—

वटको मोदकः पिण्डी गुडो वर्त्तिस्तथा वटी ।
वटिका गुड़िका चेति संज्ञाऽवान्तरभेदतः ॥ ३१ ॥
मात्राच्छायाऽऽतपच्छेद-वासविश्लेषपेषणैः ।
मन्यपीड़नसंयोग-जलकालबलावलैः ॥ ३२ ॥
द्रव्ये गुणान्तराधानं विशिष्टं क्रियते यतः ।
तेन मोदकचूर्णादि-वटकाश्च यथाश्रुति ॥ ३३ ॥

अस्यार्थः ।—मात्रादयश्चैते द्रव्याणां विशिष्टगुणान्तराधानं जनयन्ति मात्रादिभेदात् । एकमपि द्रव्यं मात्रादिभेदेन विकारविशेषं नाशयति ; यथा रसशास्त्रे त्रिविक्रमः, नवायसलौहं शोथपाण्ड्वादीन् हन्ति, त्रिकत्रयादिलौहञ्च ग्रहण्यादिकमित्यनयोर्द्रव्याणां भेदाभावः, किन्त्वनयोः लौहस्य केवलमात्राभेदत्वेनैव गुणभेदः, एवं सर्वत्र छायाऽऽतपादिष्वपि ज्ञेयम् । केषाञ्चित् भेषजद्रव्याणामवान्तरभेदविरहेऽपि छायाशोषत्वेन च गुणभेद इति गुरवः ।

---

लेहादिकमाह, क्वाथादेरिति ।—क्वाथादेरित्यत्र आदिपदेन स्वरसानुकल्पादीनां ग्रहणम् । पुनः पाकात् वस्त्रपूतस्य क्वाथस्य पुनः अग्नौ क्वथनात् । "प्राश इत्युच्यते बुधैः" इत्यत्र "तन्मात्रा स्यात् पलोन्मिता" इति पाठान्तरम् ॥ ३० ॥

भेषजानां वटकमोदकादिनामकरणे हेतुं निर्दिशति, वटक इत्यादि ।—मात्रा रक्तिकादिपरिमाणम् । छायाऽऽतपः छायायामातपे वा शुष्कीकरणम् । छेदः छेदनम्, अणुशः स्थूलशो वा छेदनमित्यर्थः । वासः कर्पूरादिभिः सुगन्धीकरणम् । विश्लेषः पृथक्करणं, द्रव्यविशेषस्य वर्जनमित्यर्थः । पेषणम् अल्पशो बहुशो वा इत्यर्थः । कालः प्रभातादिः । बलं द्रव्याणां वीर्य्यवत्त्वम् । यथाश्रुति यथाशास्त्रम् ॥ ३१—३३ ॥

अथ द्रव्याणां मात्राविधिर्लिख्यते।—

क्षितिर्नास्त्येव मात्रायाः कालमग्निं बलं वयः।
प्रकृतिं देशदोषौ च दृष्ट्वा मात्रां प्रकल्पयेत्॥ ३४॥
यतो मन्दानला ह्रस्वा हीनसत्त्वा नराः कलौ।
अतस्तु मात्रा तद्योग्या प्रोच्यते सुश्रुतसम्मता॥ ३५॥

अन्येऽप्याहुः।—

नाल्पं हन्त्यौषधं व्याधिं यथाऽल्पाम्बु महानलम्।
दोषवच्चातिमात्रं स्यात् शस्यमत्युदकं यथा॥ ३६॥

अन्यच्च।—

मात्रया हीनया द्रव्यं विकारं न निवर्त्तयेत्।
द्रव्याणामतिबाहुल्यात् व्यापत् सञ्जायते ध्रुवम्॥ ३७॥

अन्यच्च।—

मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः।
व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत्॥ ३८॥

उत्तमबलानलादौ मात्राविशेषनिर्देशः।—

उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे।
जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च॥ ३९॥

अस्यार्थः।—उत्तमस्य प्रबलाग्निबलपुरुषस्य, न पुनर्युगविशेषजातस्य पुरुषस्य, क्षितौ कलावेव शास्त्रप्रचारात्, सत्ययुगादौ व्याध्यभावात्, उत्तमादिशब्दानां युगादीनामनभिधानाच्च। पलमत्र सौश्रुतमिति गुरवः, चरकार्द्धपलोन्मानं, चरके दशरक्तिकैरिति सौश्रुतपलं चरकार्द्धपलम्। त्रिभिरक्षैरिति चरकस्य त्रिभिस्तोलैः। पलार्द्धेनेति चरके कर्षैकेण, युग-

---

मात्राविधिमुपदिशति, क्षितिरिति।—काल नित्यगम् आवस्थिकञ्च। प्रकृतिं वातलत्वादिकम्। देशः शीतप्रधान उष्णप्रधानो वा। "सुश्रुतसम्मता" इत्यत्र "सर्वसम्मता" इति पाठान्तरम्। द्रव्य वीर्य्यवत् स्वल्पवीर्य्यं वा, कोष्ठं मृदुकोष्ठं क्रूरकोष्ठं वा॥ ३४—३८॥

मात्राया अवस्थानाभावेऽपि स्वल्पबुद्धीनां दिग्दर्शनार्थमाह—उत्तमस्येति॥३९॥

प्रभावात् जघन्या एव सर्वे, अत एव जघन्या मात्रा सर्वेषां दातव्या। किञ्च "कर्षश्चूर्णस्य कल्कस्य गुड़िकानाञ्च सर्वशः" इति जघन्यमात्रामाश्रित्य चक्रदत्तेन स्वग्रन्थे लिखितमिति दिक्। काथ्यमित्यर्हणार्थे यत्, क्वाथमर्हति इति काथ्यं, तेषु स्नेहकाथ्यौषधेषु; अथवा काथ्यौषधेषु चेति काथ्यमौषधं यैः चोरजङ्गकाञ्जिकादिभिः; अतस्तानि चोरादीनि भक्षणीयानि। अतो भक्षणमात्रेति गुरवः प्राहुः।

गुडमोदकादीनां व्यवहारिकी मात्रा।—

सार्द्धं पलं पलञ्चार्द्धं विदध्यात् गुड़खण्डयोः।
श्रेष्ठमध्यमहीनेषु मात्रेयं मुनिभिः कृता॥
अत्र स्यात् सौश्रुतं पञ्च-रक्तिमाषात्मकं पलम्॥ ४०॥
मोदकं वटकं लेह्यं कर्षमात्रं प्रयोजयेत्।
कर्षद्वयं पलं वाऽपि देयं कोष्ठाग्न्यपेक्षया॥ ४१॥
श्रेष्ठमध्यमहीनेषु द्वादशाष्टचतुष्टयैः।
माषकैर्गुग्गुलोर्मात्रां कोष्ठं वीक्ष्यावचारयेत्॥ ४२॥

धातुरसादीनां व्यवहारिकी मात्रा।—

गुञ्जामात्रं रसं देवि! हेमजीर्णञ्च भक्षयेत्।
तारं त्रिगुञ्जकं प्रोक्तं रविजीर्णं द्विगुञ्जकम्॥ ४३॥
लौहाभ्रनागवङ्गानां खर्परस्य शिलाजतोः।
षड़्गुञ्जाप्रमिता मात्रा मलोपरसमाषकम्॥ ४४॥

---

गुडादीनां मात्राविधिं निर्दिशति, सार्द्धमित्यादि।—पलञ्चार्द्धं पलमर्द्धपलञ्चेत्यर्थः॥ ४०—४२॥

धातुरसादीनां व्यवहारिकीं मात्रां निर्दिशति, गुञ्जेत्यादि।—हेमजीर्णञ्च जीर्णसुवर्णमपि गुञ्जामात्रमित्यर्थः। तारं रौप्यम्। रविजीर्णं ताम्रभस्म। नागः सीसकम्। मलोपरसमाषक मलस्य लौहमलस्य मण्डूरस्य, उपरसानां गन्धकादीनाञ्च, माषकमानम्। उपरसास्तु—"गन्धकं वज्रवैक्रान्तं वज्राभ्रं तालकं शिला। खर्परं शिखितुत्थञ्च विमलं हेममाक्षिकम्॥ कासीसं कान्तपाषाणं वराटाञ्जनहिङ्गुलम्। गैरिकं शङ्खभूनागं टङ्कणञ्च शिलाजतु॥ एते चोपरसाः

कांस्यपित्तलयोर्मानं भक्षयेत् ताम्रजीर्णवत् ।
यवमात्रं विषं देवि ! गुञ्जामात्रन्तु कुष्ठिने ॥ ४५ ॥
वज्रं यवद्वयमितं तालकं यवसप्तकम् ।
ततो बुद्धा भिषक् दद्यात् प्रायो मात्रेति कीर्त्तिता ॥ ४६ ॥

कालिङ्गात मागधस्य श्रेष्ठत्वोक्तिः ।—

यस्माच्च द्विविधं मानं कालिङ्गं मागधं तथा ।
कालिङ्गान्मागधं श्रेष्ठमेवं मानविदो विदुः ॥ ४७ ॥
कालिङ्गं सौश्रुतं मानं पञ्चरक्तिकमानतः ।
दशरक्तिकमानन्तु मागधं चरकेरितम् ॥
तयोर्मागधमानन्तु प्रशंसन्ति भिषग्वराः ॥ ४८ ॥

कालिङ्गमागधयोः प्रयोगस्थलनिर्देशः ।—

कालिङ्गं शुद्धलौहादि-द्रव्यस्य कल्पने मतम् ।
कषायानुवासनादि-द्रव्यादाने तु मागधम् ॥ ४९ ॥

पाचनादौ जलपरिमाणमाह ।—

कर्षादौ तु पलं यावत् दद्यात् षोडशिकं जलम् ।
ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत् ॥ ५० ॥
चतुर्गुणमतश्चोर्द्धं यावत् प्रस्थादिकं भवेत् ।
क्वाथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम् ॥ ५१ ॥

अस्यार्थः ।—क्वाथ्यद्रव्यपले इति ।—प्रबलाग्निबलपुरुषापेक्षया क्वाथ्य-द्रव्यस्य पलं ग्राह्यं, तत्साधनार्थं प्रस्थार्द्धं जलं दत्त्वा पादावशिष्टं

---

प्रोक्ताः ॥" इति । यवमात्रमिति—विषन्तु सर्वरोगेषु यवमात्रया कुष्ठरोगिणे तु गुञ्जामात्रया दातव्यमित्यर्थः ॥ ४२—४८ ॥

कीदृशे भेषजे कालिङ्गमानानुसारेण कीदृशे वा मागधमानानुसारेण द्रव्यं ग्राह्यं तन्निर्देष्टुमाह, कालिङ्गमिति ।—"शुद्धलौहादिद्रव्यस्य" इत्यत्र "गुड़लौहादि-द्रव्यस्य" इति "शुल्वलौहादिद्रव्यस्य" इति च पाठान्तरद्वयम् ॥ ४९ ॥

पानीयक्वाथस्य स्नेहादिसाधनार्थक्वाथस्य च जलपरिमाणमाह, कर्षादाविति ।—षोड़शिकं षोड़शगुणम् ॥ ५०।५१ ॥

काय्यें, प्रस्थार्द्धत्वात् जलमष्टगुणं शरावद्वयं पादशेषेण पल-चतुष्टयं ग्राह्यमित्यर्थः। *

मृद्वादिक्वाथभेदे जलपरिमाणनिर्देशः।—

मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं भवेत्।
कठिनात् कठिनं यच्च दद्यात् षोड़शिकं जलम्॥५२॥
मृद्वादिद्रव्यसङ्घाते मानानुक्तौ चिकित्सकाः।
मध्यस्योभयभागित्वादिच्छन्त्यष्टगुणं जलम्॥५३॥

मृद्वादि इति।—मृदु आर्द्रद्रव्यम्, आदिशब्दात् कठिनातिकठिनयो-र्ग्रहणम्; एतेषां मिलितानां द्रव्याणाम् अनुक्तजलपरिमाणानां पाचनादिसाधनविधौ जलपरिमाणं मध्यस्य मध्यस्थितस्य मृद्वतिकठिनयोः कठिनस्य जलपरिमाणं प्राक् यदुक्तम् अष्टगुणं तदेव दत्त्वा पक्तव्यम्, उभयभागित्वादिति—उभयोर्मृद्वतिकठिनयोः कठिनस्य जलपरिमाणं प्राक् यदुक्तं, मध्य एव भागोक्तत्वादिति जलमष्टगुणमुचितमेव इति गुरवः।

जलपरिमाणप्रसङ्गतः पाचनानां द्रव्यपरिमाणमाह।—

दशरक्तिकमानेन गृहीत्वा तोलकद्वयम्।
दत्त्वाऽम्भः षोड़शगुणं ग्राह्यं पादावशेषितम्॥
इमां मात्रां प्रकुर्वन्ति भिषजः पाचनेषु च॥५४॥

---

"चतुर्गुणमतस्त्वोर्द्ध्वं यावत् प्रस्थादिकं भवेत्" इत्यस्याः परिभाषायाः द्रव्यविशेषे अनैकान्तिकत्वमाह, मृदाविति।—कठिनात कठिनं चन्दनखदिरकाष्ठादिकम्। मध्यस्य मृदुकठिनातिकठिनद्रव्याणां परस्परमेलनेन मध्यमगुणवतः इत्यर्थः, उभय-भागित्वात मृद्वतिकठिनोभयपक्षगुणभाक्त्वात् इत्यर्थः॥५२।५३॥

ज्वरादौ पानीयक्वाथस्य व्यवहारिकी मात्रामाह, दशेति।—सुगमम॥५४॥

---

* प्रस्थार्द्धत्वात् जलमष्टगुणमिति द्रवद्वैगुण्यात षोडशगुणमित्यर्थः, अन्यथा मानस्य अष्टगुणत्वे शरावस्यैव प्राप्तेः शरावद्वयमित्यसङ्गतेः; एवञ्च "कर्षादौ तु जलं यावत् दद्यात् षोड़शिकं जलम्" इति परिभाषाऽपि सङ्गच्छते इति।

अथ यवाग्वादिसाधने जलभेषजयोः परिमाणमाह।—

काथ्यद्रव्याञ्जलिं क्षुसं अपयित्वा जलाढ़के।
पादावशेषे तेनाथ यवाग्वाद्युपकल्पयेत्॥
यूषांश्च रसकांश्चैव कल्पेनानेन साधयेत्॥ ५५॥

पानीयसाधने जलभेषजयोः माननिर्देशः।—

यदप्सु शृतशीतासु षड़ङ्गादि प्रयुज्यते।
कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि।
अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ॥ ५६॥

कल्कसाध्यां पेयामाह केशरीटीकाकारः।—

कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम्।
विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापराम्॥ ५७॥

अस्यार्थः,—कर्षार्द्धमित्यादि।—कणा शुण्ठी च तयोर्मिलित्वा कर्षार्द्धं गृहीत्वा कल्कद्रव्यस्य च तण्डुलादेः पलं विनीय, विनीयेति पाठे—नीत्वा इत्यर्थः, विलोय्येति पाठे—कल्कीकृत्येत्यर्थः। वारिप्रस्थेनेति एकत्वमविवक्षितम्, अग्न्याद्यपेक्षया अधिकेनेति यावत्, तेन प्रस्थद्वये जले साधयित्वा अर्द्धशृतेन वारिप्रस्थेन युक्त्या किञ्चिन्न्यूनेन अधिकेन वा प्रबलाग्नि-पुरुषापेक्षया इत्यस्यापरां कल्कसाध्यां यवागूं पाचयेत् सुसिद्धां कुर्य्यादित्यर्थः। एवमन्यत्रापि पेयादिसाधने प्रबलाग्निपुरुषादौ युक्त्या प्रचुरतरं सलिलं कल्कद्रव्यं वा ग्राह्यम्। साधनक्रममाह—कणाशुण्ठ्योः कर्षार्द्धं गृहीत्वा काथ्यद्रव्यस्य पलञ्च प्रस्थद्वयेऽम्भसि अर्द्धशृतीकृत्य वारिप्रस्थं वस्त्रेण छान-यित्वा नातिसान्द्रां नातिस्वच्छां यवागूं साधयेत्। कणाशुण्ठ्योः प्रत्येकं

---

यवाग्वादिपाके जलभेषजयोः परिमाणमाह, काथ्येति।—अञ्जलिं कुडवम्। आढ़के द्रवद्वैगुण्यात् षोडशशरावे। एषा तु परिभाषा प्रबलाग्निबलपुरुषापेक्षया ज्ञातव्या। मतान्तरे तु पलमानं काथ्यं जलाढ़के पक्त्वा अर्द्धावशेषः करणीयः, तथा च—"काथ्यद्रव्यपलं क्षुसं अपयित्वा जलाढके। अर्द्धशृतेन तेनाथ यवाग्वाद्युपकल्पना॥" इति। प्रास्थिके द्रवद्वैगुण्यात् शरावचतुष्टये। मात्रा चैषा अल्पाग्निबलापेक्षिणी ज्ञातव्या, उत्तममध्यमाग्निबलमपेक्ष्य तु मात्रैषा युक्त्या वर्द्धयितव्या इति॥ ५५—५७॥

कर्षार्द्धं कृत्वा पृथग्योगोऽयमिति कश्चित्। ननु यद्येवं भेषजं क्वाथः सामान्यादिक्रमपि, तत् किमर्थं—"कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि" इति षड़ङ्गपरिभाषा? अत आह, षड़ङ्गपरिभाषायां प्राय इति प्राचुर्य्येण, प्रचुरस्थले षड़ङ्गपरिभाषेव पेयादिसम्मता पेयादिषु कीर्त्तिता, पेयादिषु मन्यते इति यावत्। अयमर्थः,—प्रायेण षड़ङ्गपरिभाषयैव व्यवहार इति षड़ङ्गपरिभाषोक्ता। प्रबलाग्निपुरुषे तु बहुभोक्तरि स्तोकतोयेन यवागूर्न सिध्यति, युक्त्या क्वाथप्राबल्यं क्वाथप्राबल्ये भेषजप्राबल्यं केनाक्षया पतितमिति सर्वमवदातम्। निश्चलकरेण तु पलमत्र सोऽश्रुतमित्यग्राह्यमिति व्याख्यातम्। अत्र नारायणदासेन व्याख्यातं—कणाशुण्ठ्योः कर्षार्द्धं वेति तीक्ष्णद्रव्योपलक्षणं, कल्कद्रव्यस्य वा पलमिति मृदुद्रव्योपलक्षणं, मृदुकठिनयोर्युक्त्या कर्षद्वयमिति। अपरामिति ये यवाग्वादयः षड़ङ्गपरिभाषया सिद्धाः न तदर्थेयं परिभाषा, किन्तु तदितरार्थेयमित्यर्थः। आकृतिपूर्वमत्र ( पूर्वत्र ? ) कर्षमात्रं द्रव्यमुक्तम्, अत्र तु कर्षाधिकमपि, पूर्वत्र तु प्रस्थमात्रं जलमुक्तम्, अत्र प्रबलाग्निबलपुरुषार्थं बहुयवागूसाधने प्रस्थाधिकमपि गृह्यते, क्वचित् प्रस्थन्यूनेऽपि यूषः साध्यते। पूर्वम् अर्द्धशृतजलमुक्तम्, अत्र तु क्वचित् पादावशिष्टमपि। मांसरसे साध्यमाने पानयोग्यावशिष्टे इति युक्तिशब्दार्थः, तदेतदुक्तं भवति—"यवागूः षड़्गुणे तोये प्रस्थे प्रस्थाधिकेऽपि वा। रसेन पाके मांसस्य सुसिध्यति हि यावता॥ अष्टशिष्टो भवेत् यूषः क्वचित् पादावशेषतः। अष्टादशगुणे तोये यूषः शार्ङ्गधरेरितः॥" इति। गुरवस्त्वाहुः,—परिभाषेयं पानीयसाधनविषयिणी, चक्रपाणिदत्तेन पानीयसाधनप्रकरणे षड़ङ्गपानीयषड़ङ्गपानीयानन्तरं पिप्पलीपानीयं लिखितं, कणाशुण्ठ्योः कर्षार्द्धं वारिप्रस्थेन साध्यम्। ननु अत्र कल्कद्रव्यस्य वा पलमिति कथमुक्तम्? अत आह नारायणान्तरङ्गः,—मृदुद्रव्यस्य उपलक्षणमिति। यद्यपि पिप्पलीये पानीये आनुषङ्गिकत्वात् युक्त्याऽपरान् यूषान् पेयादीन् वा धात्वपेक्षया साधयेत्, तथाऽपि तण्डुलादीनां पलं कल्कीकृत्य वारिप्रस्थेनार्द्धशृतेन साध्यम्, अतः षड़ङ्गपरिभाषेव प्रायः पेयादिसम्मतेत्युक्त्वा पश्चादेषा लिखिता, पेयादयस्तु षड़ङ्गपरिभाषया सर्वत्र साधनीयाः; प्रायःशब्दात् प्रचुरस्थले षड़ङ्गपरिभाषा सम्मता, तदितरार्थेयमिति।

यवागूसाधने तण्डुलप्रकारमाह।—

यवागूमुचिताद्भक्ताच्चतुर्भागकृतां वदेत्॥ ५८॥

उचिततण्डुलाच्चतुर्भागैकभागमानं क्षुद्रिततण्डुलमाहुः, तैः कृतां यवागूं वदेदित्यर्थः, "याउ" इति लोके।

अन्नादिसाधने जलपरिमाणमाह।—

अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे।
मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि॥ ५९॥

मण्डादिलक्षणमाह।—

सिक्थकैः रहितो मण्डः पेया सिक्थसमन्विता।
यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा॥ ६०॥

अन्यच्च।—

यवाग्वाः यवागूविशेषकृशरायाश्च पाकविधिः।—

यवागूः षड्गुणे तोये सिद्धा स्यात् कृशरा घना।
तण्डुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हि सा॥ ६१॥

---

*यवागूपाके तण्डुलमानमाह, यवागूमिति।—उचितात् भक्षस्यात्, तद्दिवसे यावत् भोक्तुं शक्नुयात्, तावन्मानादित्यर्थः। "तद्दिवसीयबुभुक्षापेक्षया" इति शिवदासः॥ ५८॥

अन्नादिपाकार्थं जलपरिमाणमाह, अन्नमिति।—पञ्चगुणे इति तण्डुलापेक्षया पञ्चगुणे जले इत्यर्थः। यवागूः षड्गुणेऽम्भसि इति यवागूशब्देनात्र पेया विवक्षिता, पेयायाः पृथक् जलमानानुक्तत्वात्, यवागूशब्दस्य च सामान्यतः मण्डादिबोधकत्वात्। केचित्तु विलेप्यादीनां जलमानैः सह अन्नस्य पञ्चगुणं जलं संयोजनीयमिति वदन्ति व्यवहरन्ति च तथैव, एवञ्च विलेपी नवगुणे, मण्ड एकोनविंशतिगुणे, पेया एकादशगुणे साध्या इति॥ ५९॥

मण्डादीनां लक्षणमाह, सिक्थकैरिति।—सुगमम्॥ ६०॥

यवागूं तथा यवागूविशेषकृशराञ्चाह, यवागूरिति।—यवागूः षड्गुणे तोये सिद्धा स्यादित्यन्वयः; सा चेत् तण्डुलादिभिः षड्गुणे च तोये साधिता, तथा घना च स्यात्, तदा सा यवागूः कृशरा, केचिदिति शेषः। "कृशरा तिलतण्डुल-

यवागूगुणाः ।—

यवागूर्ग्राहिणी बल्या तर्पणी वातनाशिनी ॥ ६२ ॥

विलेप्याः पाकविधिर्गुणाश्च ।—

विलेपी च घना सिक्थैः सिद्धा नीरे चतुर्गुणे ।
विलेपी तर्पणी हृद्या मधुरा पित्तनाशिनी ॥ ६३ ॥

पेयायूषयोः पाकविधिः ।—

द्रवाधिका घना सिक्था चतुर्दशगुणे जले ।
सिद्धा पेया बुधैर्ज्ञेया यूषः किञ्चिद्घनः स्मृतः ॥ ६४ ॥

पेयायूषयोर्गुणाः ।—

पेया लघुतरा ज्ञेया ग्राहिणी धातुपुष्टिदा ।
यूषो बल्यः स्मृतः कण्ठ्यो लघुपाकः कफापहः ॥ ६५ ॥

भक्तस्य पाकविधिः गुणाश्च ।—

जले चतुर्दशगुणे तण्डुलानां चतुःपलम् ।
विपचेत् स्रावयेन्मण्डः स भक्तो मधुरो लघुः ॥ ६६ ॥

---

काथकृता यवागू” इति शिवदासः । अस्याः क्रिशरेति संज्ञान्तरं ज्ञातव्यं, तथा च द्रव्यगुणसङ्ग्रहे—“तिलतण्डुलमाषैस्तु कृशरा क्रिशरेति च” इति ॥ ६१ ॥

यवाग्वाः सामान्यगुणमाह, यवागूरिति ।—यवागूर्ग्राहिणीत्यत्र यवागूः पेया कृशरा वा ॥ ६२ ॥

विलेप्याः पाकविधिं गुणञ्चाह—विलेपी चेति ॥ ६३ ॥

पेयायूषयोः मतान्तरसिद्धं साधनविधिमाह,द्रवाधिकेति ।—द्रवाधिका घना इत्यत्र घना बह्वीत्यर्थः, “पेया सिक्थसमन्विता” इति लक्षणात् । यूषः किञ्चिद्घनः स्मृतः इत्यत्र घनत्वं चतुर्दशगुणजलसाधितपेयाऽपेक्षया बोद्धव्यम् । अत्र यूषस्य जलमानानुक्तेः पेयायाश्चतुर्दशगुणमेव यूषेऽपि योजनीयं, यदुक्तमन्यत्र—“अर्द्धशिष्टो भवेत् यूषः क्वचित् त्र्यंशावशेषितः । अष्टादशगुणे तोये यूषमिच्छन्ति केचन । चतुर्दशगुणे तोये यूषमिच्छन्ति चापरे ॥” इति ॥ ६४।६५ ॥

भक्तस्य मण्डस्य च साधनविधिमाह, जले इत्यादि ।—मण्डः चतुर्दशगुणजलसाधितत्वेन मण्डप्रायः इत्यर्थः, भक्तः अन्नम्

मण्डपाकविधिः।—

नीरे चतुर्दशगुणे सिद्धो मण्डस्त्वसिक्थकः॥ ६७॥

तण्डुलानामिति क्षुद्रिततण्डुलानामित्यर्थः। स्रावयेदिति वस्त्रादिना चालयेत्। असिक्थक इति सिक्थकरहित इत्यर्थः, अन्नादिरहित-सिक्थकः कुटीति (सिटि) लोके।

अथ मांसरससाधनविधानमाह।—

द्रव्यतो द्विगुणं मांसं सर्वतो द्विगुणं पयः।
पादस्थं संस्कृतं चाज्ये षडङ्गो यूष उच्यते॥ ६८॥
पलानि द्वादश प्रस्थे घनेऽथ तनुके तु षट्।
मांसस्य वटकं कुर्य्यात् पलमच्छतरे रसे॥ ६९॥

अस्यार्थः।—घने मांसरसे कर्त्तव्ये प्रस्थे जले मांसस्य द्वादशपलं दत्त्वा पक्तव्यम्। तनुके रसे कर्त्तव्ये मांसस्य षट्पलं पानीयं प्रस्थमेव दातव्यम्। अच्छतरे रसे कर्त्तव्ये प्रस्थे जले मांसस्य पलं दत्त्वा एतन्मांसं पिष्ट्वा प्रस्थार्द्धशेषस्थितजले पक्त्वा अनुरूपं स्थाप्यं, वस्त्रेण छानयित्वा यूषः कार्य्यः। मांसस्य वटकं कुर्य्यादिति खिन्नमांसस्य पलं पिष्ट्वा वटकान् विधाय घृतादौ भर्जयित्वा अच्छतररसं साध्यमित्यर्थः, अन्यथा मांसपलस्याति-द्रवपाके विलयनं स्यादित्याशङ्कया वटकं कुर्य्यादित्याह।

लाक्षारससाधनमाह।—

षड्गुणेनाम्भसा लाक्षा दोलायन्त्रे ह्युपस्थिता।
त्रिसप्तधा परिस्राव्या लाक्षारसमिमं विदुः॥ ७०॥

नीरे चतुर्दशगुणे इत्यादिनोक्तमण्डलक्षणे तण्डुलस्य उचितात्रत्वात् चतुर्भागत्वं बोद्धव्यं, न तु भक्तोक्तचतुष्पलमानत्वम्। यद्वा—जले इत्यादि असिक्थक इत्यन्तेन सार्द्धश्लोकेन केवलमण्डलक्षणं ज्ञातव्यम; अस्मिन् पक्षे—मण्ड' स भक्तः,—मण्डाख्यः स भक्त' पानीयान्नविशेषः इत्यर्थः। सिद्धो मण्डः,—प्रदर्शितप्रकारेण साधितः मण्डाख्यः भक्त इत्यर्थः॥ ६६।६७॥

मांसरसविधिमाह,द्रव्यत इति।—द्रव्यतः यत्राधिकारे चक्रपाणिकथितषडङ्गयूषोक्त-यवादिद्रव्यापेक्षयेत्यर्थः। सर्वतः मिलितद्रव्यमांससमानापेक्षयेत्यर्थः। पयः जलम्॥ ६८ ६९॥

लाक्षारससाधनविधिमाह, षड्गुणेनेति।—षड्गुणेनेति लाक्षामपेक्ष्य बोद्धव्यम्। त्रिसप्तधा एकविंशतिवारान्॥ ७०॥

अथ प्रक्षेपविधिमाह।—

**प्रक्षेपः पादिकः क्वाथ्यात् स्नेहे कल्कसमो मतः।**
**परिभाषामिमामन्ये प्रक्षेपेऽप्यूचिरे परम्॥ ७१॥**

अस्यार्थः।—स्नेहे पातव्यघृतादिसाधने तैलादिसाधने वा प्रक्षेपः शर्करामधुप्रभृतीनामिति कल्कसमो मतः ज्ञायते स्म इत्यर्थः। क्वाथ्यादिति पाचनादिद्रव्यात् कर्षात् प्रक्षेपः पादिकश्चतुर्माषको ज्ञेय इति चक्रपाणिदत्तसम्मतः। अन्येऽपि वृद्धादय इमां परिभाषां प्रक्षेपेऽपि ऊचिरे परिभाषयाम्बभूवुः, अत एव चक्रदत्तोऽपि तत् स्वीकृत्य स्वसङ्ग्रहे लिखितवान्।

चूर्णादीनां भक्षणप्रकारमाह।—

**कर्षश्चूर्णस्य कल्कस्य गुड़िकानाञ्च सर्वशः।**
**द्रवशुक्त्या स लेढ़व्यः पातव्यश्च चतुर्द्रवः॥**
**मात्रा चौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्॥ ७२॥**

अस्यार्थः।—चूर्णं कल्को गुड़िका, चकारात् वटिका च यद्युपयुज्यते, तर्हि सर्वत्र वक्ष्यमाणविशेषं विना तोलकद्वयमुपयुज्यते। स चूर्णादिः कर्षो यदि लेढ़व्यः, तर्हि द्रवशुक्त्या माक्षिकप्रभृतीनाम् अर्द्धपलेन तोलकचतुष्टयेनेति यावत्, चूर्णस्य तथा लेढुं सुखत्वात्; पातव्यश्चेत् तदा चतुर्द्रव इति माक्षिकादीनां चतुर्गुणेन पलेनेति शेषः, तथा सति चूर्णस्य पातुं सुखत्वादित्ययं प्रधानार्थः साम्प्रदायिकैश्चक्रदत्तादिभिर्मन्यते। अन्ये तु प्रक्षेपेऽप्येनां मन्यन्ते; तथा हि तेषामयमर्थः,—यत्र चूर्णस्य कल्कस्य गुड़िकानाञ्च भेषजानामुपयोगस्तत्र कर्षः प्रक्षेपो दातव्यः। शेषार्थः सुगमः। मात्रा, चौद्रघृतादीनामिति चौद्रप्रभृतीनां मधुघृतगुड़ानां स्नेहे क्वाथे वा प्रक्षेपश्चूर्णवत्, चूर्णस्य उक्तः; तर्हि यत्र घृतादयः प्रक्षेप्यास्तत्रैषां घृतचौद्रादीनां

---

प्रक्षेप इत्यादि।—"इमां वक्ष्यमाणाम्" इति शिवदासः; तेन "कर्षश्चूर्णस्य कल्कस्य" इत्यादिना वक्ष्यमाणामित्यर्थः। "परम्" इत्यत्र "यथा" इति चक्रधृतपाठः॥ ७१॥

इति परिभाषाप्रदीपे द्वितीयखण्डव्याख्या समाप्ता।

कर्ष इत्यर्थः ; एतत्, रास्नादिक्काथ्यस्य कर्षस्य प्रक्षेप्यं मिलितयोः शर्करा-मधुनोः पादिकं माषचतुष्टयं प्रदेयमिति साम्प्रदायिकमतम् ; यदुक्तमन्यत्र,—"प्रक्षेपः पादिकः क्काथ्यात् स्नेहे कल्कसमो मतः" इति "अयमग्रतमः सर्व-वादिनामविवादतः" इति। अन्ये तु शर्करामधुनोः प्रत्येकं द्रङ्क्षणं कृत्वा मिलित्वा द्रङ्क्षणद्वयं कर्षं दातव्यमाहुः ; "शाणौ द्वौ द्रङ्क्षणं विद्यात् तौ द्वौ कर्ष उडुम्बरः।" "परमतमव्याहतमनुमतमेव" इति न्यायात् चक्रदत्तानुमतमेतत्, किन्तु सर्वत्र मेवम् ; अपितु क्वचित् किञ्चिद्दोषवयो-बलाद्यपेक्षया इत्यवधेयम्। वस्तुतस्तु वातज्वरार्त्ते रास्नादिकषाये शर्करा-माषकत्रयं मधुमाषैकं प्रक्षेप्तुमर्हति, यथा चैतत् तथा—"षोड़शाष्टचतुर्भागं वाते पित्ते कफे क्रमात्। क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा॥" इति संहितोपाये स्वयमेव चक्रेण व्याख्यातम्। इह तु पादिकप्रक्षेपात् क्रियासिद्धिरित्यभिप्रायेण तन्नाभिहितं, ह्येयमन्यत्। किञ्च चूर्णवदिति प्रक्षेप्यक्षौद्रघृतादीनामपि चूर्ण इव, चूर्णस्य जरणादेर्यथा शाणः प्रक्षेपस्तथा क्षौद्रघृतादीनामपि शाणो देयः इति गुरवः, प्रक्षेपः पादिकः क्काथ्यादिति वाक्यस्य एकवाक्यत्वान्मनोहरम्।

क्काथेन चूर्णपानं यत् तत्र क्काथप्रधानता।
प्रवर्त्तते न तेनात्र चूर्णापेक्षी चतुर्द्रवः॥ ७३॥

अस्यार्थः।—यत्र चूर्णपानं यौगिकं तत्र चूर्णस्य प्राधान्यात् कर्षमानं, तस्मात् क्काथ्यं चतुर्गुणं, तस्य क्काथस्य तत्र अप्राधान्यं, यत्र क्काथेन सह प्रक्षेप्यस्य चूर्णस्य पानं तत्र क्काथस्य प्रधानत्वाच्चूर्णापेक्षी चतुर्द्रवः चतुर्गुणत्वं द्रवस्य न प्रवर्त्तते इति।

मतान्तरमाह द्रव्यविशेषस्य।—

माषिकं हिङ्गु सिन्धूत्थं जरणाद्यास्तु शाणिकाः।
सितोपलागुडक्षौद्रं सामान्यांशप्रकल्पनाः॥ ७४॥

अस्यार्थः।—हिङ्गुसैन्धवयोः प्रक्षेप्ययोस्तैक्ष्ण्यान्माषिकम्। जीरकाद्याः पुनः क्काथ्यात् पादिका एव। सितोपला-सिता-शर्करादीनाञ्च सामान्यानां सामान्यांशानाम् उत्तमस्य पलं मात्रा इत्यादीनामिव अंशांशकल्पनाः

कार्य्या इति सामान्यांशं पलविकर्षार्द्धपलरूपं सौश्रुतमित्यर्थः। सामान्य-मिति प्रक्षेपः पादिकः क्वाथ्यादिति, तेन पादिकम् इति गुरवः ।

दोषभेदे मधुशर्करयोः प्रक्षेप-मानमाह ।—

षोड़शाष्टचतुर्भागं वातपित्तकफार्त्तिषु ।

क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा ॥ ७५ ॥

षोड़शाष्टचतुर्भागमिति वायो पित्ते च कफे च कषायपाने क्षौद्रं प्रक्षेप्यं वायो षोड़शांशं, पित्ते अष्टांशं, कफे चतुर्थांशम् । शर्करायास्तु वायो चतुर्थांशं, पित्ते अष्टमांशं, कफे षोड़शांशमिति विपरीतेति वचनसामर्थ्यात् ।

क्षीरादिपाकमाह ।—

द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् ।

क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥ ७६ ॥

क्षीरमस्त्वारनालानां पाको नास्ति विनाऽम्भसा ।

सम्यक्पाकं न गच्छन्ति तस्मात् तोयं चतुर्गुणम् ॥ ७७ ॥

एतत्तु वचनं केवलक्षीरपक्वपाचनादौ क्षीरपञ्चमूल्यादावित्यर्थः, नान्यत्र तैलघृतादिपाके, तत्र द्रवान्तरमस्त्येव, यत्र तैलादिपाके केवलं चतुर्गुणं क्षीरमेवास्ति, न द्रवान्तरमस्ति, तत्र कण्ठोक्तत्वात् परिभाषा न प्रवर्त्तते ; यथा "अव्यक्तानुक्तलेशोक्तसन्दिग्धार्थप्रकाशिका:" इत्यभिप्रेत्य व्याख्येयमिति गुरवः ।

इति परिभाषाप्रदीपे द्वितीयः खण्डः ।

---

## तृतीयः खण्डः ।

अथ स्नेहसाधने क्वाथ्यजलादेः परिमाणमाह ।—

क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् ।

स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः ॥

चतुर्गुणन्त्वष्टगुणं द्रवद्वैगुण्यतो भवेत् ॥ १ ॥

अथेदानीं स्नेहपाकविधिमाह, क्वाथ्यादिति ।—पादस्थं स्याच्चतुर्गुणमित्यस्य स्नेहा-दित्यनेन सम्बन्धः। क्वाथ्यद्रव्यापेक्षया चतुर्गुण द्रवद्वैगुण्यादष्टगुणं जलं पाकार्थं दत्त्वा तदादि चतुर्भागावशिष्टं सत् स्नेहाच्चतुर्गुणं कर्त्तव्यमित्यर्थः ॥ १ ॥

अपिच।—

अत्र द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम्।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत् ॥ २ ॥

अन्यच्च।—

जलमष्टगुणं क्वाथ्यात् क्वाथस्य जलपादिकः।
क्वाथाच्च पादिकः स्नेहः स्नेहात् कल्कस्तु पादिकः ॥ ३ ॥
पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ।
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम् ॥ ४ ॥

केवलेन क्षीरद्रवेण पक्वव्यस्य स्नेहस्य विधिमाह, अत्रेति।—अत्र क्षीरषट्पलघृते, द्रवान्तरानुक्तौ स्वरसक्वाथादिद्रवान्तरानुल्लेखादित्यर्थः। परिभाषेयं ज्वराधिकारे क्षीरषट्पलके घृते लिखिता श्रीचक्रपाणिना ॥ २। ३ ॥

पञ्चप्रभृति इति।—अर्वाक् पञ्चभ्यो द्रवेभ्योऽर्वाक् एकद्वित्रिचतुःपर्य्यन्तम् इत्यर्थः, चतुर्गुणमिति मिलित्वा चतुर्गुणमित्यर्थः, "स्नेहात्तोय चतुर्गुणम्" "स्नेहाच्चतुर्गुणो द्रवः" इति चरकसुश्रुतोक्त्या चतुर्गुणद्रवं स्नेहपाकस्योत्सर्गसिद्धत्वात्। अत्राह प्रथितनामा गङ्गाधरः,—"तत्र जिज्ञास्यं—स्नेहचतुर्गुणो द्रव इति यदुक्तं तत् किमेकस्य द्रवस्य? अथ किं द्वयोः? अथवा त्रयाणां चतुःप्रभृतीनां सर्व्वेषामिति? तत्राह कश्चित्—एकेनापि द्रवेण चातुर्गुण्यं, द्वाभ्याञ्च चातुर्गुण्यं, त्रिभिरपि चातुर्गुण्यं, चतुर्भिस्तु समनिति चातुर्गुण्यम्। इत्येवमेकद्वित्रिद्रवद्रव्येषु चतुर्गुणत्वन्यूने स्नेहसाधनप्रतिषेधार्थं "स्नेहाच्चतुर्गुणो द्रवः" इति सुश्रुतः, "स्नेहात्तोयं चतुर्गुणम्" इति दृढबल उक्तवान्, न तु पञ्चप्रभृतिद्रवेषु चतुर्गुणाधिक्ये प्रतिषेधार्थम्। तत्र 'भागेऽप्यनुक्ते समता विधेया' इति परिभाषया स्नेहसमत्व प्रत्येकमिति। अथैवञ्चेत्तर्हि यत्र क्षीरमेकमेव द्रवं, तत्र क्षीरमेव चतुर्गुणं भवति भवतु, यत्र तु क्षीरञ्चापरञ्च द्रवमेकं द्वयं वा, तत्र किं क्षीरेण सहापरेणैकेन द्रवेण चातुर्गुण्ये कर्त्तव्ये समता क्षीरापरयोः कर्त्तव्या? तथात्वे क्षीरं द्विगुणं द्रवान्तरञ्च द्विगुणं भवति। क्षीरेण सह चापरयोश्चातुर्गुण्ये च किं समता कर्त्तव्या? तत्र त्रयाणां चातुर्गुण्ये कृते प्रत्येकं समत्वमिति। तत्राह—नैवं, क्षीरे विशेषवचनात्, तद्यथा—"यत्र द्रवान्तरं नोक्तं तत्र क्षीरं चतुर्गुणम्॥ द्रवान्तरप्रयोगे तु क्षीरं स्नेहसमं मतम्॥" इति। नन्वेतेन द्रवान्तरप्रयोगे क्षीरस्य स्नेहसमत्ववचनेन तत्र यत् द्रवान्तरमेकं द्वयं त्रयं वा, तत् किं क्षीरं

अस्यार्थः।—अत्र यशोधरव्याख्यामाह—अत्र मिलित्वैव चातुर्गुण्य-

---

मिनैकेन चातुर्गुण्यं, द्वाभ्यामपि चातुर्गुण्यं, त्रिभिरपि चातुर्गुण्यं, चतुर्भिः सममिति चातुर्गुण्यं कर्त्तव्यम्? अथ किं क्षीरेण सहैव? क्षीरेण सह द्रवान्तरमेकं यत्र तत्र विशेषोक्त्या किं क्षीरं स्नेहसम द्रवान्तरमेकं त्रिगुणं द्वयमपि त्रिगुणं त्रयमपि त्रिगुणमिति प्रत्येकं सममिति? तत्राह—क्षीरेण सहैव द्रवान्तरं चतुर्गुणं कर्त्तव्यं, तत्र क्षीरं स्नेहसमं, द्रवान्तरमेकं त्रिगुणं, द्वयमपि त्रिगुणं, त्रयमपि त्रिगुणमिति सक्षीरेण चतुर्णां समत्वमिति। तदुक्तं—"पञ्च प्रभृति यत्र स्याद्द्रवन्तु स्नेहसंविधौ। तत्र स्नेहसमं प्राहुरर्वाक् च स्याच्चतुर्गुणम्॥ स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः॥" इति। अत्र स्नेहसमं क्षीरमित्युक्तेरर्वाक् स्नेहाच्चतुर्गुणवचनेन क्षीरेण सहैवार्वाचां द्रवाणां चातुर्गुण्यं, "स्नेहाच्चतुर्गुणो द्रवः" इति सुश्रुतवचनात् "स्नेहात्तोयं चतुर्गुणम्" इति दृढबलवचनाच्च इति। नैवं विज्ञायते, अर्वाक् पञ्च प्रभृति द्रवात् चेत् स्यात् तदा स्नेहाच्चतुर्गुणमित्युक्त्या ह्येकेन द्रवान्तरेण क्षीरोक्तौ क्षीरं स्नेहसमं त्रिगुणमपरं द्रवम्। द्वाभ्यां सह क्षीरोक्तौ क्षीरं स्नेहसमं, द्वयोर्द्रवान्तरयोः प्रत्येकं स्नेहात् सार्द्धगुणत्वमिति मिलितयोस्त्रैगुण्यम्। त्रिभिः सह क्षीरोक्तौ चतुर्णां क्षीरसहितानां प्रत्येकं समत्वमिति चातुर्गुण्यं यथा भवति, तथा किं चतुर्भिः सह क्षीरोक्तौ पञ्चप्रभृत्युक्तिर्भवति, तत्र प्रत्येकं सममिति क्षीरं स्नेहसममिति न व्याहन्यते इति चेत्तदा "चतुःप्रभृति यत्रोक्तम्" इत्येव पाठात् सिध्यति, व्यर्थः पञ्चप्रभृतीति पाठः? द्रवान्तरैर्हि त्रिभिः सह क्षीरोक्तौ चत्वारि द्रवाणि भवन्ति, तत्र स्नेहसममिति सिध्यति, क्षीरञ्च स्नेहसममित्युपपद्यते। एवमनुपपत्तौ सत्यां यत् पञ्चप्रभृतीति पठितं, तेनैवं विज्ञापितं, यत्र क्षीरेण सहैकं द्वयं त्रयं चतुष्टयं वा द्रवमुक्तं, तत्र क्षीरातिरिक्त-द्रवान्तराणामेकेनापि चातुर्गुण्यं, द्वाभ्यामपि चातुर्गुण्यं, त्रिभिश्च चातुर्गुण्यं, चतुर्भिस्तु सममिति प्रत्येकं मिलित्वा चातुर्गुण्यमिति पञ्च प्रभृति द्रवात् क्षीरातिरिक्ता-दर्वागेकं द्रवान्तरमपि चतुर्गुणं, द्वयमपि मिलित्वा चतुर्गुणं, त्रयमपि मिलित्वा चतुर्गुणं, चतुष्टयमपि मिलित्वा चतुर्गुणमिति प्रत्येकं समं, क्षीरञ्च सर्वत्र स्नेहसममिति पञ्चगुणो पाकः; उक्तञ्च—'रुकाद्विविचतुर्भिस्तु कुर्य्यात् स्नेहचतुर्गुणम्। क्षीरं स्नेहसमं तत्र मानानुक्तावयं विधिः॥' इति"। केचित्तु चतुर्गुणमित्यस्य मिलित्वा चातुर्गुण्यव्याख्याने यत्र स्नेहे द्रवचतुष्टयं विद्यते, तत्र प्रत्येकद्रवस्य स्नेहसमत्वे पञ्चप्रभृति इत्युपादानस्य वैयर्थ्यात् अर्वाक् च स्याच्चतुर्गुणमित्यस्य एकादिचतुःपर्य्यन्तद्रवे विद्यमाने प्रतिद्रवस्य चतुर्गुणत्वमिति व्याचक्षते, तथा च—"द्रवाणि यत्र स्नेहेषु

मिति युक्तमेव एकादिचतुर्द्रवपर्य्यन्तम्, अन्यथाऽत्रानुपपत्तिः स्यात्। द्रवचतुष्टयविषयेण (?) चरितार्थमेव तद्वचनं, तत्र द्रवचतुष्टयसमन्वे तु न वस्तुक्षतिः ; तस्मादेकेनापि चातुर्गुण्यम् इत्यादि चतुर्भिः सममित्यन्ता परिभाषा द्रवचतुष्टयविषये तावत्। यत्र स्नेहादेः पाकविधौ द्रवाणि पञ्चप्रभृतिषट्सप्ताष्टाधिकतराणि च देयानि स्युः, तत्र स्नेहसमानानि देयानि ; अर्व्वागिति पञ्चशब्दस्य, अर्वाक् पञ्चमादित्यर्थः, तेन एकादि-चतुःपर्य्यन्तं द्रवाणां चातुर्गुण्यं स्नेहभागापेक्षया इति। एक-द्वि-त्रिद्रव-योगेऽपि मिलित्वा चातुर्गुण्यं, चतुर्षु द्रवेषु तु प्रत्येकं स्नेहस्य भागापेक्षया चातुर्गुण्यमित्येके वदन्ति, एतेन चतुर्णां चातुर्गुण्यं, त्रयाणामपि द्वयोरपि एकस्यापि चातुर्गुण्यं, पञ्चापेक्षया एषाम् एकादिचतुर्णां प्रति चार्वाक्त्वमित्यभिप्रायः।

अन्यच्च।—

एकद्वित्रिद्रवद्रव्यैः कुर्य्यात् स्नेहाच्चतुर्गुणम्।
क्षीरं स्नेहसमं देयं चतुर्भिश्च चतुर्गुणम्॥ ५॥
कल्काच्चतुर्गुणः स्नेहः स्नेहात्तोयं चतुर्गुणम्।
क्वाथ्याच्चतुर्गुणं वारि क्वाथः स्नेहसमो भवेत्॥ ६॥
जलस्नेहौषधानाञ्च प्रमाणं यत्र नेरितम्।
पादः स्यादौषधं स्नेहात् स्नेहात्तोयं चतुर्गुणम्॥ ७॥

---

प्रभृतीनि भवन्ति हि। तत्र स्नेहसमान्याहुर्यथापूर्वं चतुर्गुणम्॥" अत्र यथापूर्वं चतुर्गुण-मिति विलोमतः पूर्वं पूर्वं चतुरारभ्यैकान्त द्रव प्रत्येकं स्नेहाच्चतुर्गुण देयमित्यर्थः॥ ४॥

मतान्तरमाह, एकेति।—स्नेहाच्चतुर्गुणमिति मिलित्वा, चतुर्भिश्च चतुर्गुणमिति प्रत्येकं बोद्धव्यं, पृथक् वचनात्। स्नेहात्तोयं चतुर्गुणमित्यत्र तोयशब्दः द्रवमात्रस्योप-लक्षणम्। क्वाथ्याच्चतुर्गुणं वारि इत्यत्र "चतुर्गुणन्त्वष्टगुणं द्रवद्वैगुण्यतो भवेत्" इति नियमात् जलमत्राष्टगुणं बोद्धव्यम् ; अथवा मृदुद्रव्यविषयिणीयं परिभाषा मन्तव्या, "मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं भवेत्" इत्यादि पूर्वोक्तनियमात्। क्वाथः स्नेहसमो भवेत् इत्येषा परिभाषा पञ्चप्रभृतिद्रवविषयिणी ज्ञेया, अन्यथा एकादिचतुःपर्य्यन्तेषु द्रवचातुर्गुण्यनियमबाधात्। "क्वाथ्यः स्नेहसमो भवेत्" "क्वाथ्यः क्वाथसमो भवेत्", इति पाठान्तरद्वयम्॥ ५—७॥

वृषादिकुसुमात् कल्कः केवलं स्नेहसिद्धये।
प्रोक्तः स्नेहपादार्द्धः स्नेहकार्य्ये मनीषिभिः॥ ८॥

अन्यच्च।—

स्नेहे सिध्यति शुद्धाम्बु-नि क्वाथस्वरसैः क्रमात्।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम्॥ ९॥
स्वरसक्षीरमाङ्गल्यैः पाको यत्रेरितः क्वचित्।
जलं चतुर्गुणं तत्र वीर्य्याधानार्थमावपेत्॥ १०॥

स्वरसक्षीरमाङ्गल्यैरित्युपलक्षणे तृतीया। माङ्गल्यं दधि।

न मुञ्चति रसं द्रव्यं क्षीरादिभिरुपस्कृतम्॥
सम्यक् पाको न जायेत तस्मात्तोयं चतुर्गुणम्॥ ११॥

विष्णुतैलपाके केवलं दुग्धचतुर्गुणे पाकः, तत्र वीर्य्याधानार्थं जलं चतुर्गुणं केचिदिच्छन्ति, तदसत्; नायं क्षीरपाकः, किन्तु क्षीरचतुर्गुणे तैलस्य पाकः, नेदं तैलं द्रवप्रधानम्, "एतदङ्गवरं तैलम्" इति ग्रन्थान्तरे पाठात्, अङ्गवरं कल्कप्रधानमित्यर्थः। अथवा पाको द्विविधः क्षीरस्य—क्षीरकरणकः, क्षीरकर्मकः। अत्र पुनः क्षीरकरणकः पाकः। क्षीरकर्मकः क्षीरपाकः "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्" इति वचनात् अत्र चतुर्गुणं द्रवं विना सम्यक् पाको न स्यादित्यर्थः। यदि तु विष्णुतैले जलं चतुर्गुणं ददाति तदा द्रवबाहुल्यदोषः स्यात्, चतुर्गुणदुग्धेनैव फलसिद्धेः इति गुरवस्त्वाहुः; परिभाषा तु काण्ठोक्तं विना इति।

स्नेहपाकविधौ यत्र क्षीरमेकन्तु कथ्यते।
तोयादीनामनिर्देशे क्षीरमेव चतुर्गुणम्॥ १२॥

एतदेव समाधानमत्युचितम्।

---

पुष्पकल्कविषयिणीं परिभाषामाह, वृषादीति।—वृषादिकुसुमात् वासकादिपुष्पात्, आदिशब्देन शणकोविदारादीनां ग्रहणं, यदुक्तमन्यत्र—"वृषस्य कोविदारस्य शणकुसुमस्य च मालतेः। कल्काद्धं रात् पुष्पकल्कं प्रस्थे पलचतुष्टयम्"॥ इति। स्नेहपादार्द्धः स्नेहाष्टमांश इत्यर्थः, यदुक्तमन्यत्र "पुष्पकल्कस्तु यः स्नेहस्य तोयं चतुर्गुणम्। स्नेहात् स्नेहाष्टमांशस्तु पुष्पकल्कः प्रयुज्यते॥" इति॥ ८॥

अकल्कोऽपि भवेत् स्नेहो यः साध्यः केवले द्रवे ॥ १३ ॥
स्नेहपाकविधौ यत्र प्रमाणं नेरितं क्वचित्।
स्नेहस्य कुड़वं तत्र पचेत् कल्कपलेन तु ॥ १४ ॥
मानानुक्तौ घृते तैले प्रस्थमाहुश्चिकित्सकाः ॥ १५ ॥
द्विगुणं त्रिगुणं वाऽपि बहुमात्राच्च पादिकम्।
योगं यदि पचेन्मूढो हीनवीर्य्यं भवेत् तदा ॥ १६ ॥
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता।
अनुक्ते द्रवकार्य्ये तु सर्वत्र सलिलं मतम् ॥ १७ ॥

अन्येऽप्याहुः।—

अङ्गेऽप्यनुक्ते विहितन्तु मूलं भागेऽप्यनुक्ते समता विधेया।
द्रवेऽप्यनुक्ते जलमेव देयं कालेऽप्यनुक्ते दिवसस्य पूर्वम् ॥१८॥
प्रसारण्यादिनिर्दिष्टं शतमेकं पृथक् पृथक्।
जलद्रोणेन चैकैकं साधयेत् श्लक्ष्णकुट्टितम् ॥ १९ ॥
काथ्यद्रव्यस्य बाहुल्यात् उदकं स्वल्पमेव तु।
सम्यक् पाकं न जायेत हीनवीर्य्यन्तु केवलम् ॥ २० ॥

स्नेहे इत्यादि।—उपक्लृप्तं ख्यापितम् ॥ ९—१३ ॥

अनिर्दिष्टप्रमाणानां स्नेहानां मात्रां निर्दिशति, स्नेहेति।—स्नेहस्य कुडवं तत्रेति परिभाषा नव्यविषयिणी ज्ञातव्या, "अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते। तथादौ स्नेहकुडव इष्यते स्नेहवेदिना॥" इति शास्त्रात्, "मानानुक्तौ घृते तैले प्रस्थमाहुश्चिकित्सकाः" इति वक्ष्यमाणशास्त्रविरोधाच्च। मानानुक्तावित्यादि परिभाषा नव्येतरविषयिणी बोद्धव्या ॥ १४।१५ ॥

द्विगुणमिति।—निर्दिष्टमानात् द्वित्रिगुणादिकम् अल्पमात्रं वा स्नेहस्नेहादिकं प्रत्यग्रमौषधं यदि पचेत्, तदा तदौषधं हीनवीर्य्यं भवेदित्यर्थः ॥ १६—१८ ॥

प्रसारण्यादीति।—प्रसारण्यादिषु कुब्जप्रसारणी-त्रिशतीप्रसारणी सप्तशतीप्रसारण्यादिषु निर्दिष्टं शतमेकं प्रत्येकशतपलमित्यर्थः, त्रिशतीप्रसारण्यादितैलेषु प्रतिशतपलक्वाथार्थं द्रोणमितं जलं दत्त्वा पृथक् पृथक् पक्तव्यं, प्रतिशतं द्रोणमितजला-दित्यर्थः ॥ १९।२० ॥

कल्कक्वाथावनिर्देशे गणात् तस्मात् समाहरेत् ॥ २१ ॥
समस्तं वर्गमर्द्धं वा यथालाभमथापि वा।
प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागवित् ॥ २२ ॥
यत्राधिकरणेनोक्तिर्गणे स्यात् स्नेहसंविधौ।
तत्रैव कल्कनिर्य्यूहाविष्येते स्नेहवेदिना ॥ २३ ॥

यत्रेत्यादि।—अधिकारितया यत्र गणत्वमधिकृतं तत्रोभयकल्पना, यत्र तन्नास्ति तत्र मुख्यतया कल्कस्यैव; अतः चक्रपाणिकृतसङ्ग्रहे पिप्पल्यादिघृते तेनैव परिभाषा लिखिता। तत्र निश्चलकरेण व्याख्यातं —न चायं पिप्पल्यादिगणोऽधिकरणेन उक्तिरिति, अतः पिप्पल्यादेः कल्कसाध्यत्वं ज्ञेयं, न क्वाथकल्कौ कुर्य्यात् इति। अत्र चोक्तम् "एतद्वाक्यबलादेव कल्कसाध्यपरं घृतम्" इति। यत्र स्नेहसाधने अधिकरणेन उक्तिः स्यात्तत्र गणे कल्कनिर्य्यूहौ साध्यौ; यत्र गणे अधिकरणेन उक्तिर्नास्ति तत्र कल्ककल्पनैव, न क्वाथः कार्य्य इति।

---

कल्कक्वाथानुक्तौ विधिमाह, कल्केति।—यत्र स्नेहे अयं कल्कः अयं क्वाथः इत्येवं निर्देशो न विद्यते, अथच विदारीगन्धादिगणेन शालसारादिगणेन वाजिगन्धादिगणेन वा स्नेहः साध्यः इत्येवं निर्देशः कृतः, तत्र तस्यैव गणस्य कल्कं पादिकं क्वाथञ्च चतुर्गुणं दत्त्वा स्नेहः साधनीय इति। "समस्तं वर्गमर्द्धं वा" इत्यादि परिभाषाऽपि गणविषयिणी ज्ञेया ॥ २१।२२ ॥

गणेन स्नेहसाधनोक्तौ कर्त्तव्यविधिमाह, यत्रेति।—स्नेहसंविधौ स्नेहपाकविधौ यत्र गणे अधिकरणेन अधिकारतया, गणमधिकृत्येत्यर्थः, उक्तिः स्यात्, आरग्वधादिगणेन भद्रदार्वादिगणेन वा स्नेहः साध्य इत्येवमुक्तिर्विद्यते इत्यर्थः, स्नेहवेदिना तत्रैव कल्कनिर्य्यूहौ तस्य गणस्य कल्कक्वाथौ इष्येते, अन्यथा कल्क एव इष्यते इत्यर्थः। प्रथितनामा गङ्गाधरस्तु श्लोकमिममन्यथा व्याचष्टे—"यत्राधिकरणे यस्मिन् स्थाने, स्नेहसंविधौ स्नेहसाधनविधाने, गणे द्रव्याणां समूहे, कल्कक्वाथयोर्विशेषेण नोक्तः, तत्रैव कल्कनिर्य्यूहाविति। अधिकरणशब्दस्तु स्थाने प्रयुज्यते सर्वैराचार्य्यैः; तैत्तिरीयोपनिषदुक्तम—'अथातः संहिताया उपनिषदं व्याख्यास्यामः पञ्चस्वधिकरणेष्विति'। तस्मादनिर्देशे यावान् द्रव्यगणः स्नेहसाधने निर्दिष्टः, स च द्रव्यगणः कल्कतया क्वाथतया च प्रयोक्तव्यः,

**गणोक्तमपि यत् द्रव्यं भवेद्व्याधावयौगिकम्।**
**तदुद्धरेत् यौगिकन्तु प्रक्षिपेत् यदकीर्त्तितम् ॥ २४ ॥**

यत्र व्याधौ ये गणाः सन्ति तत्रैव धात्वपेक्षया न विहितास्तत्र गणोक्ता अपि अयौगिकत्वात् हेयाः, धातुव्याध्यनुरूपम् अकीर्त्तितमपि यौगिकं प्रक्षिपेत्। यथा—वायौ रूक्षशैत्यादि, तीक्ष्णकटुकादि पित्ते, कफे स्निग्धमधुरादि, एतत् सर्वं गणोक्तमपि न देयं, वातादिषु यदुपयुक्तं तदेव देयम्; यदुक्तं लौहशास्त्रे पतञ्जलादयः,—"उचितमपि हेयमौषधमनुचितमुपादेयम्" इति सङ्क्षेपः, उचितमप्ययौगिकं हेयम्, अनुचितं यौगिकमपि धात्वनुरूपमुपादेयं ग्राह्यमित्यर्थः।

शार्ङ्गधरस्त्वाह।—

**कल्काच्चतुर्गुणीकृत्य घृतं वा तैलमेव वा।**
**चतुर्गुणद्रवे साध्यं तस्य मात्रा पलोन्मिता ॥ २५ ॥**

पलोन्मितेति पानादौ मात्रा देया निष्पन्नस्य घृतादेः।

**निक्षिप्य क्वाथयेत्तोयं क्वाथ्यद्रव्याच्चतुर्गुणम्।**
**पादशेषं गृहीत्वा तु स्नेहं तेनैव साधयेत् ॥ २६ ॥**
**क्षीरे द्विरात्रं स्वरसे त्रिरात्रं तक्रारनालादिषु पञ्चरात्रम्।**

न चायं गणशब्दो गणसंज्ञया यो यो गणः पञ्चमूलादिरुक्तः, तन्मात्रे विवक्षितः, किन्तु त्रिप्रभृतिद्रव्यसमूहे विवक्षितः, गणास्तस्मादत्युक्तेः" इति ॥ २३।२४ ॥

इदानीं स्नेहसाधने शार्ङ्गधरमतमुपन्यस्यति, कल्कादिति।—तस्य मात्रा पलोन्मिता इति उत्तमबलानलादिविशिष्टपुरुषापेक्षया, "उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे। जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ॥" इति पूर्वोक्तस्मरणात् ॥ २५।२६ ॥

"घृततैलगुडादींश्च नैकाहादवतारयेत्। व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः ॥" इति स्मरणात् गुणवैशिष्ट्यार्थं क्षीरादिना पक्वस्य स्नेहस्य विरामकालमाह, क्षीरे इति।—क्षीरेण सह पक्तव्यस्नेहस्य एकाहेनैव पाको न निष्पादनीयः, प्रथमदिने किञ्चित् क्षीरावशेषं पक्त्वा अवतार्य स्थापयेत्, ततो द्वितीयदिने पाकशेषं कुर्यात्, एवं स्वरसादिष्वपि यथानिर्देशं कर्त्तव्यम्; अथवा क्षीरेण सह पक्त्वा, किञ्चित् क्षीरावशेषमवतार्य द्विरात्रं स्थापयेत्, ततस्तृतीयदिने पाकशेषं कुर्यात्, तथा च अस्मिन्नर्थे पाठान्तरं यथा—"स्नेहान् विपाच्य विरामयेत्तु क्षीरे द्विरात्रं स्वरसे त्रिरात्रम्। कल्के कषायेषु च पञ्चरात्रं दद्यादारनाले पुनरेकरात्रम् ॥"

स्नेहं पचेद्वैद्यवरः प्रयत्नादित्याहुरेके भिषजः प्रवीणाः॥ २७॥

---

इति। अत्र पुनरिदं जिज्ञास्यं—स्नेहोऽयं किं द्रवेणादौ पक्तव्यः पश्चात् सचतुर्गुण-जलेन कल्केन? उतादौ कल्केन पश्चात् द्रवेण कार्य्यः? आहोस्वित् कल्कं द्रवञ्च ऐकध्यं संसृज्य पक्तव्यः इति? उच्यते, "स्नेहाच्चतुर्गुणो द्रवः स्नेहचतुर्थांशो भेषजकल्कः, तदैकध्यं संसृज्य विपचेत्" इति सुश्रुतवचनात् कल्कं द्रवञ्च स्नेहे दत्त्वा एकत्र विपचेत्, न तु पृथक् पृथक् इति। एवञ्च "क्षीरे द्विरात्रं स्वरसे त्रिरात्रं कल्के कषायेषु च पञ्चरात्रम्" इत्यादिवचनेन क्षीरादिषु पृथक् पृथक् विरामकाल-दर्शनात् क्षीरादिद्रवेषु कल्के च यत् पृथक् पृथक् पाकः कार्य्य इति केषाञ्चित् मतं, तन्न सम्यक्, युक्तिविरोधात् सुश्रुतविरोधाच्च; यदि हि कल्कपाकः पृथक् क्रियेत, तदा किं स्नेहेन कल्कस्य भर्जनं कर्त्तव्यम्? न च तथा व्यवहरन्ति वृद्धाः, कल्कपाकार्थं चतुर्गुणं जलं दातव्यञ्चेत् "स्नेहसिद्धौ द्रवेऽनुक्ते सर्व्वत्राम्बु चतुर्गुणम्" इति नियमात् अनुक्तद्रवे एव जलं विहितं, न तूक्ते द्रवे, अतः पुनर्जलदाने द्रवाधिक्यात् परिभाषाविरोधः, तस्मात् द्रवं कल्कञ्च एकत्र दत्त्वा विपचेत्, तत्र क्षीरेण पक्त्वा द्विरात्रं स्वरसेन त्रिरात्रमित्यादिरूपं विश्रामयेत्, यत्र तु केवलः कल्कः द्रवान्तराभावश्च, तत्रैव चतुर्गुणं जलं दत्त्वा पक्त्वा च पञ्चरात्रं विश्रामयेत् इति। अत्राह श्रीगङ्गाधरः,—"अथ स्नेहपाकोऽयं किं द्रवेणादौ कर्त्तव्यः, पश्चात् कल्केन चतुर्गुण-जलेन? अथवा आदौ कल्केन पश्चात् द्रवेण कार्य्यः? इति चेन्न, यतः सुश्रुतेनोक्तं—"स्नेहाच्चतुर्गुणो द्रवः स्नेहचतुर्थांशो भेषजकल्कः, तदैकध्यं संसृज्य विपचेत्" इति; तस्मात् स्नेहे कल्कं द्रवञ्च दत्त्वा एकत्र पचेत् इति, न तु पृथक् पृथक्। तत्राह कश्चित्, "स्नेहान् विपाच्यैवं विरामयेत्तु क्षीरे द्विरात्रं स्वरसे त्रिरात्रम्। कल्के कषायेषु च पञ्चरात्रं त्वारनाले पुनरेकरात्रम्॥" इत्यनेन पृथक् पृथक् विरामकालवचनात् क्षीरादिषु पृथक् पाकः कल्के च पृथक् पाकः इति, तन्न, सुश्रुतवचनविरोधात् युक्तिविरोधाच्च। यदि हि पृथक् कल्केन पाकः क्रियते, तदा स्नेहे किं कल्कं भज्जेत्? ततः पाकार्थं चतुर्गुणं जलं दातव्यञ्चेत् तच्च परिभाषा 'स्नेहसिद्धौ द्रवेऽनुक्ते सर्व्वत्राम्बु चतुर्गुणम्" इति, तत्र द्रवानुक्तौ जलं विहितं, न चोक्ते द्रवे सति जलविधानं, तस्मादेवं सुश्रुतवचनाविरोधेनैवं व्याख्येयं, क्षीरादिद्रवाणि कल्कञ्चैकध्यं संसृज्य विपचेत्, तत्र क्षीरञ्च कल्कश्च यत्र, तदैकध्यं द्वयं संसृज्य पक्त्वा द्विरात्रं विश्रामयेत्। स्वरसश्च कल्कश्च यत्र, तदैकध्यं संसृज्य पक्त्वा त्रिरात्रं विरामयेत्। अत्र कल्कश्च क्षीरादीनां द्विरात्रादिकानि द्रवाणि

द्वादशाहन्तु मूलानां वल्लीनां क्रममेव च ।
एकाहं व्रीहिमांसानां पाकं कुर्य्याद्विचक्षणः ॥ २८ ॥
चतुर्गुणं मृदुद्रव्ये काठिनेऽष्टगुणं जलम् ।
तथाच मध्यमे द्रव्ये दद्यादष्टगुणं पयः ॥
अत्यन्तकठिने द्रव्ये नीरं षोडशिकं मतम् ॥ २९ ॥
कर्षादितः पलं यावत् क्षिपेत् षोड़शिकं जलम् ।
तदूर्द्ध्वं कुड़वं यावत् भवेत् अष्टगुणं पयः ॥
प्रस्थादितः क्षिपेन्नीरं खारी यावच्चतुर्गुणम् ॥ ३० ॥
अम्बुक्वाथरसैर्यत्र पृथक् स्नेहस्य साधनम् ।
कल्कस्यांशं तत्र दद्याच्चतुर्थं षष्ठमष्टमम् ॥ ३१ ॥

---

च, तत्र कल्कं गर्भे दत्त्वा, तत्तत् क्षीरादिकञ्च प्रत्येकं दत्त्वा संमूर्च्छ्य पक्त्वा स्वस्वोक्तकालं विरामयेत्—क्षीरे त्रिरात्रं, स्वरसे त्रिरात्रं, कषाये पञ्चरात्रं, दध्नि एकरात्रम्, आरनाले चैकरात्रमिति । कल्के चानुक्तद्रवे यत्र स्नेहपाकः, तत्र चतुर्गुणं जलं कल्कञ्च ऐकध्यं संमूर्च्छ्य पक्त्वा पञ्चरात्रं विरामयेत् विशेषेण गुणाधानार्थम्, उक्तं हि—"घृततैलगुडादींश्च नैकाहादवतारयेत् । व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः ॥" इति । क्षीरादिभ्यो द्रवेभ्योऽन्यत्र द्रवे तक्रसुरासवादौ स्नेहपाकः एकदिने सम्भवति, तद्व्यावृत्त्यर्थं नैकाहादिति । विरामरात्रात् न्यूनत्वे तु विशेषेण गुणाधानाभावमात्रं, न तु स्नेहपाकासिद्धिः, अधिके च न दोषः इति निष्कर्षः" इति । द्वादशाहमिति ।—केवलेन मूलेन अङ्गान्तरविरहितेन अनुक्तद्रवेण च केवलमूलजातीयेन कल्केन तथा केवलया वल्ल्या वा अङ्गान्तरविरहितेन अनुक्तद्रवेण च केवललताजातीयेन कल्केनेत्यर्थः, पक्तव्यस्य स्नेहस्य द्वादशाहेन पाकः सम्पादनीयः, न तु त्वगाद्यङ्गान्तरयुक्तेन वल्लीमूलेन पक्तव्यस्य, तस्य क्षीरे त्रिरात्रमित्यादि परिभाषयैव लब्धत्वात् इति । एकाहं व्रीहिमांसाना-मिति केवलव्रीहिमांसक्वाथाभ्यां पक्तव्यस्य स्नेहस्य पाकः एकाहेनैव सम्पादनीयः, न तु क्वाथान्तरसंसृष्टाभ्यां, केवलव्रीहिमांसक्वाथयोर्व्युष्टयोर्दोषलत्वात्, तदुक्तं "केवले व्रीहिमन्स्वङ्ग क्वाथो व्युष्टस्तु दोषलः । स्यात्ततो वर्जयेद्व्युष्टमन्यमिश्रो न दोषलः ॥ इति ॥ २७—३० ॥

अम्बुक्वाथेति ।—अम्बुक्वाथेत्यादि परिभाषाद्वयं चरकसुश्रुतविरुद्धत्वात् केचिद्-

अस्यार्थः।—केवलजलसिद्धे स्नेहमाले कल्कस्य चतुर्थांशं स्नेहापेक्षया देयम्। एवं क्रमात् केवलतु क्वाथसिद्धे कल्कस्य षडंशं देयम्। रसैरिति स्वरसैः सिद्धे कल्कस्याष्टांशं देयमित्यर्थः।

दुग्धे दध्नि रसे तक्रे कल्को देयोऽष्टमांशिकः।

कल्कस्य सम्यक् पाकार्थं तोयमत्र चतुर्गुणम्॥ ३२॥

अस्यार्थः।—केवलदुग्धसिद्धे तैलादौ स्नेहादष्टांशिकः कल्कः कार्य्यः, एवं दध्नि, * रसे इति स्वरसे, तक्रे इति पारिभाषिकतक्रे, सर्वत्राष्टांशिकः कल्को देयः। एतेषां घनत्वेन कदाचित् सम्यक् पाकाभावत्वात् सर्वस्मिन्नपि चतुर्गुणं जलं दापयन्ति वृद्धाः।

द्रवाणि यत्र स्नेहेषु पञ्चादीनि भवन्ति हि।

तत्र स्नेहसमान्याहुर्यथापूर्वं चतुर्गुणम्॥ ३३॥

पञ्चादीनीति पञ्चषट्सप्ताष्टकानि तदतिरिक्तान्यपि यत्र स्नेहे द्रवाणि देयानि स्युः, तत्रेमानि स्नेहतुल्यानि भवन्ति। यथापूर्वमिति प्रतिलोमरीत्या पूर्वं पूर्वं चतुःप्रभृत्येकपर्य्यन्तं प्रत्येकं स्नेहाच्चतुर्गुणं द्रवं देयमिति केचिदाहुः। अन्ये तु एकादिचतुःपर्य्यन्तं मिलित्वा चतुर्गुणं ददते, तेनैकस्यापि चातुर्गुण्यं द्वयोरपि त्रयाणामपि चतुर्णामपि चातुर्गुण्यमिति; यथा महेश्वरश्चक्र-शेषटीकायामाह—गुडूचीतैले गुडूचीक्वाथं द्वादशशरावं दुग्धं शराव-चतुष्टयम् इति मिलित्वा षोड़शशरावं टीकायां लिखति। एवं द्राक्षारसस्य षोड़शशरावं दत्त्वा एकस्य द्रवस्य चतुर्गुणं लिखति। एवं यष्टिमधुगाम्भारि-फलयोर्मिलितयोः चतुःषष्टिपलं गृहीत्वा पाकार्थं चतुःषष्टिशरावे पानीये पक्वाऽवशिष्टषोड़शशरावं दत्त्वा तैलत्रयं पचति; यथा—"गुडूची-

---

मार्षमाहुः। रसे स्वरसे। तक्रे चतुर्थांशजलेनालोड़िते इत्यर्थः, "तक्रं पादजलं प्रोक्तम्" इत्युक्तत्वात्॥ ३१।३२॥

द्रवाणीति।—व्याख्यातोऽयं प्राक्॥ ३३॥

---

* "रसे इति स्वरसे" इत्यत्र "रसे इति स्वरूपे" इति पाठे—स्वरूपे स्वरसात्मके असिद्धे रसे, न तु पारिभाषिकमांसरसात्मके रसे इत्यर्थः। तक्रे इति पारिभाषिकतक्रे "तक्रं पादजलं प्रोक्तम्" इत्यादिरूपे इत्यर्थः, न तु तक्रसामान्ये।

क्वाथदुग्धाभ्यां तैलं द्राक्षारसेन वा । सिद्धं मधुकाश्मर्य्य-रसैर्वा वातरक्तनुत् ॥" इति ।

द्रव्येण केवलेनैव स्नेहपाको भवेत् यदि ।
तत्राम्बुपिष्टः कल्कः स्याज्जलञ्चात्र चतुर्गुणम् ॥ २४ ॥
क्वाथेन केवलेनैव पाको यत्रेरितः क्वचित् ।
क्वाथ्यद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते ॥ २५ ॥
कल्कहीनस्तु यः स्नेहः स साध्यः केवले द्रवे ॥ २६ ॥
पुष्पकल्कस्तु यः स्नेहस्तत्र तोयं चतुर्गुणम् ।
स्नेहात् स्नेहाष्टमांशस्तु पुष्पकल्कः प्रयुज्यते ॥ २७ ॥

अथ स्नेहनिष्पत्तिलक्षणमाह ।—

स्नेहकल्को यदाऽङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत् ।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत् ॥ २८ ॥
शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा ।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत् ॥
फेनोऽतिमात्रं तैलस्य शेषं घृतवदादिशेत् ॥ २९ ॥

द्रव्येणेति ।—द्रव्येण क्वाथ्यद्रव्येणेत्यर्थः । "द्रवेण" इति पाठान्तरमसाधु । द्रव्येण तथा क्वाथेनेत्यादि परिभाषाद्वयं चरकसुश्रुतादिभिरगृहीतत्वेनानार्षत्वात् शिष्टैरव्यवहृतम् ॥ २४—२७ ॥

अथ स्नेहस्य पाकसिद्धिलक्षणमाह, स्नेहकल्क इति ।—"तदा सिद्धिं विनिर्दिशेत्" इत्यनन्तरं "यदा कल्को न करोति शब्दं नाङ्गुलिलेपो विशदोऽपि नास्ति । संवर्त्तितो वर्त्तिमुपैति कल्को निष्पत्तिरेषा घृततैलयोश्च ॥" इत्यधिकः पाठः क्वचित् दृश्यते । तत्र अग्नौ वह्नौ । विशदः अङ्गुलिस्पर्शाददपिच्छिल इत्यर्थः । उपरमे निवृत्तौ । गन्धवर्णरसादीनां सम्पत्तौ यस्य स्नेहस्य यादृशः गन्धः, यादृशः वर्णः, यादृशो वा रसः प्रसिद्धः, तेषां निष्पत्तौ इत्यर्थः । एतल्लक्षणन्तु निष्पन्नस्य घृतस्य । तैलस्य विशेषलक्षणमाह, फेन इति ।—निष्पन्ने तु घृते फेनविरतिर्जायते, तैले तु अतिमात्रं फेनोद्गमो भवति, शेषन्तु घृतपाकलक्षणवदिति विदुः ॥ २८।२९ ॥

क्षारस्य पाकसिद्धिलक्षणम् ।—

एवमेव क्षारतोयं साधयेत्तु घृतादिषु ।
फेनोदयस्य निष्पत्तिर्नष्टदुग्धसमाकृतिः ॥
स एव तस्य पाकस्य कालो नेतरलक्षणम् ॥ ४० ॥

त्रिविधः स्नेहपाकः, तेषां लक्षणानि च ।—

स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा ।
ईषत्सरसकल्कस्तु स्नेहपाको भवेन्मृदुः ॥ ४१ ॥
मध्यपाकस्य सिद्धिश्च कल्के नीरसकोमले ।
ईषत्कठिनकल्कश्च स्नेहपाको भवेत् खरः ॥ ४२ ॥
तदूर्द्ध्वं खरपाकः स्यात् दाहकृन्निष्प्रयोजनः ।
आमपाकश्च निर्वीर्य्यो वह्निमान्द्यकरो गुरुः ॥ ४३ ॥

घृतादिषु प्रतिसारणीयक्षारपाकलक्षणमाह, एवमिति ।—"फेनोदयस्य" इत्यत्र "फेनोद्गमेऽस्य" इति पाठान्तरम् ॥ ४० ॥

मृद्वादिभेदेन त्रिविधस्य पाकस्य लक्षणमाह, स्नेहपाक इति ।—"कल्को नीरस-कोमलः" इत्यत्र "कल्के नीरसकोमले" इति पाठान्तरम् । "खरपाकः" इत्यत्र "दग्धपाकः" इति पाठः साधुः । आमपाकः असम्पूर्णपाकः । "वह्निमान्द्यकरो गुरुः" इत्यनन्तरं—"वर्त्तिवत् स्नेहकल्कः स्यादङ्गुल्या च विवर्त्तितः । शब्द-हीनोऽग्निनिक्षिप्तः स्नेहः सिद्धो भवेत्तदा ॥ यदा फेनोद्गमस्तैले फेनहीनस्तु सर्पिषि । वर्णगन्धरसोत्पत्तौ स्नेहसिद्धिस्तदा भवेत ॥" इत्यधिकः पाठः क्वचित् पुस्तके । स्नेहपाकविज्ञानमुक्तं सुश्रुतेन यथा—"अत ऊर्द्ध्वं स्नेहपाकक्रममुपदेक्ष्यामः, स च त्रिविधः, तद्यथा—मृदुर्मध्यः खर इति । तत्र स्नेहौषधविवेकमात्रं यत्र भेषजं स मृदुरिति । मधूच्छिष्टमिव विशदमविलेपि यत्र भेषजं, स मध्यमः । कृष्णमव-सन्नमीषदिश्यदं विकृतञ्च यत्र भषजं, स खर इति । अत ऊर्द्ध्वं दग्धस्नेहो भवति, तं पुनः साधु साधयेत् । तत्र पानाभ्यवहारयोर्मृदुः, नस्याभ्यञ्जनयोर्मध्यमः, वस्तिकर्ण-पूरणयोस्तु खर इति" । चरकेऽप्युक्तं—"स्नेहपाकस्त्रिधा ज्ञेयो मृदुर्मध्यः खरस्तथा । तुल्यः कल्केन निर्य्यासो भेषजानां मृदुः स्मृतः ॥ मध्यपाक इव निर्य्यासो मध्ये दर्व्वीं विमुञ्चति । शीर्य्यमाणे तु निर्य्यासे वर्त्तमाने खरस्तथा ॥ खरोऽभ्यङ्गे स्मृतः पाको मध्यो नस्तःक्रियासु च । मृदुपाकस्तु पानार्थे वस्तौ चापि नियोजयेत् ॥"

विषयविशेषे मृद्वादिपाकविधिः।—

नस्यार्थं स्यान्मृदुः पाको मध्यमः सर्वकर्मसु।
अभ्यङ्गार्थं खरः प्रोक्तो युञ्ज्यादेवं यथोचितम्॥ ४४॥

अन्यच्च।—

मृदुर्नस्ये खरोऽभ्यङ्गे वस्तौ पाने च मध्यमः।
तुल्ये कल्के च निर्य्यासे भेषजानां मृदुः स्मृतः॥ ४५॥
शम्पाक इव निर्य्यासो मध्या दर्वीं विमुञ्चति।
शीर्य्यमाणे तु निर्य्यासे वर्त्यमाने खरः स्मृतः॥ ४६॥

मृद्वादिपाकस्य प्रशस्तत्वादिनिर्देशः।—

सर्वेषामिह द्रव्याणां मध्यपाकः प्रशस्यते।
वरं पाको मृदुः कार्य्यः तथाऽपि न खरो मतः॥
किञ्चिद्वीर्य्यं मृदुर्धत्ते तज्जहाति खरः पुनः॥ ४७॥

अन्यत्पाकलक्षणमाह।—

वर्त्तिवत् स्नेहकल्कः स्यात् यदाऽङ्गुल्या विवर्त्तितः।
शब्दहीनाऽग्निनिक्षिप्तः स्नेहः सिद्धो भवेत्तदा॥ ४८॥
यदा फेनोद्गमस्तैले फेनहीनस्तु सर्पिषि।
वर्णगन्धरसोत्पत्तौ स्नेहसिद्धिस्तदा भवेत्॥ ४९॥

अन्यच्च।—

व्युष्य व्युष्य पाके स्नेहादीनां गुणवैशिष्ट्यनिर्देशः।—

घृत-तैल-गुडादींश्च नैकाहादवतारयेत्।
व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः॥५०॥

---

इति। अन्यत्राप्युक्तम्—"स्नेहस्य त्रिविधः पाको मृदुमध्यः खरस्तथा। स्नेहपाको भवेत् कल्के मृदुरङ्गुलिलेपनि॥ न गच्छत्यङ्गुलिं मध्यः शीर्य्यमाणे खरः स्मृतः॥ नस्ये मृदुर्भवेत् सिद्धं पेये सिद्धन्तु मध्यमम्। नातिखरं पचेत् वस्तौ खर-मभ्यञ्जने पचेत॥" इति। शम्पाकः आरग्वधः, तस्य मज्जा। "शम्पाकः" इत्यत्र "संयावः" इति पाठान्तरम्। शीर्य्यमाणे भज्यमाने॥ ४१—४९॥

एकस्मिन्नेव दिने घृतादीनां पाकशेषस्य अकर्त्तव्यतामाह, घृतेत्यादि।—व्युषिताः पर्य्युषिताः, कतिचिद्दिनानि दत्तविरामा इत्यर्थः॥ ५०॥

व्युष्टव्रीह्यादिक्काथस्य सदोषत्वनिर्देशः।—

केवलं व्रीहिजन्त्वङ्ग-क्काथो व्युष्टस्तु दोषलः॥ ५१॥

अथ गुड़पाकलक्षणमाह।—

यदा दर्वीप्रलेपः स्यात् यदा वा तन्तुलोभवेत्।
तोयपूर्णे च पात्रे तु क्षिप्तो न प्लवते गुडः॥ ५२॥
क्षिप्तस्तु निश्चलास्तिष्ठेत् पातितस्तु न शीर्य्यति।
एष पाको गुडादीनां सर्वेषां परिकीर्त्तितः॥ ५३॥
सुखमर्दः सुखस्पर्शो गन्धवर्णरसान्वितः।
पीड़ितो भजते मुद्रां गुड़ः पाकमुपागतः॥ ५४॥

गुग्गुलुपाकलक्षणम्।—

गुड़वद्गुग्गुलोः पाकः सबन्धस्तु विशेषतः॥ ५५॥

---

द्रव्यविशेषे व्युषितक्काथस्य दोषमाह, केवलमिति।—व्रीहिजन्त्वङ्गक्काथः व्रीहीणां माषमसूरादीनां; जन्त्वङ्गानां छागादिमांसादीनां, क्काथः व्युष्टः पर्य्युषितः। "दोषलः" इत्यनन्तरं "घृततैलगुडादींश्च साधयेन्नैकवासरे। प्रकुर्वन्त्युषिता ह्येते विशेषात् गुणसञ्चयम॥" इत्यधिकः पाठः क्वचित॥ ५१॥

अथ गुडपाकलक्षणमाह, यदेति।—पाककाले यदा दर्व्यां लिम्पति, तन्तुलीभवति शर्करादिपाके तन्तुवत् सानुबन्धीभवतीत्यर्थः। न प्लवते तोयोपरि प्लवमानो न वर्त्तते इत्यर्थः। न शीर्य्यति परितः चूर्णीभूत एव न प्रसरतीत्यर्थः। मुद्राम् अङ्गुलीरेखाम॥ ५२—५४॥

गुग्गुलुपाकलक्षणमतिदिशति, गुडवदिति।—सबन्धः पिण्डाकारत्वेन गुडिकादिरूपेण वा बन्धनार्हः इत्यर्थः। सुपक्को गुडः गाढद्रवो भवति, गुग्गुलुस्तु पिण्डवत् बन्धनयोग्यो भवति इति गुग्गुलुगुडयोः पाकवैशिष्ट्यम। "सबन्धस्तु" इत्यत्र "सुगन्धस्तु" "रसो गन्धो" इति च पाठान्तरद्वयम्। "गुडवद्गुग्गुलोः" इत्यत्र "रसो गन्धः शुभः पाके वर्त्तिः स्यात् गाढमर्दनात्" इति पूर्वार्द्धः केनचित् पठ्यते॥ ५५॥

गुग्गुलुसेवनमात्रानिर्देशः।—

श्रेष्ठमध्यमहीनेषु द्वादशाष्टचतुष्टयैः।
माषकैर्गुग्गुलोर्मात्रां व्याधिं वीक्ष्य प्रयोजयेत्॥ ५६॥

अथ लोहशोधनादिपरिभाषामाह।—
(यदाहुस्त्रिविक्रमादयः लोहप्रदीपे)—

शुद्ध्यर्थं त्रिफला लोहात् कर्त्तव्या द्विगुणा सदा।
चतुर्गुणं फलात्तोयमर्द्धभागावशेषितम्॥ ५७॥

एष एव विधिर्नित्यं क्षालनेऽपि प्रशस्यते॥ ५८॥

वधार्थं त्रिफला ग्राह्या लोहान्नित्यं चतुर्गुणा।
तोयमष्टगुणं तत्र चतुर्भागावशेषितम्॥ ५९॥

भानुपाकार्थमिच्छन्ति त्रिफलामयसा समाम्।
सलिलं द्विगुणं तत्र चतुर्भागावशेषितम॥ ६०॥

पाच्यद्रव्यात् तु पाकार्थं त्रिफला त्रिगुणेरिता।
तस्यात् षोडशगुणं तोयमष्टभागावशेषितम्॥ ६१॥

अन्यानि यानि वस्तूनि योक्तव्यानि पुटादिषु।
तानि लोहसमान्याहुर्जलं प्रागेव कीर्त्तितम्॥ ६२॥

गुग्गुलोर्मात्रामाह, श्रेष्ठेत्यादि।—श्रेष्ठमध्यमहीनेषु उत्तममध्यमाधमबलानल-विशिष्टेषु पुरुषेषु इत्यर्थः। द्वादशाष्टचतुष्टयैरिति क्रमात् बोद्धव्यम्॥ ५६॥

इदानीं लोहमारणार्थं तस्य शोधनादिविधिमाह, शुद्ध्यर्थमिति।—शुद्ध्यर्थं लोहशोधनार्थम्। फलात् त्रिफलातः। क्षालनेऽपि धौतकरणेऽपि, एष एव विधिः शोधनार्थे त्रिफलायाः क्वाथकरणस्य यो विधिः, स एव विधिः, शोधनानन्तरं लोह-प्रक्षालने कर्त्तव्ये पूर्वविधिना त्रिफलायाः क्वाथं कृत्वा तेन क्वाथेन प्रक्षालये-दित्यर्थः। वधार्थे मारणार्थे, शोधनक्षालनानन्तरं मारणकार्य्यार्थमित्यर्थः। भानु-पाकार्थं सूर्य्यकिरणे शोषणार्थं, लोहसमां त्रिफलां द्विगुणजलेन क्वाथयित्वा पादाव-शेषं गृह्णीयात्, तस्मिन् क्वाथे लोहं प्रक्षिप्य क्वाथशोषं यावत् सूर्य्यसन्तापे स्थापयेत् इति। पाच्यद्रव्यात लोहादित्यर्थः। पाकार्थं स्थालीपाकार्थम्। अन्यानि यानि वस्तूनि लोहप्रदीपोक्तानि त्रिफलाव्यतिरिक्तानि यानि पेषणार्थद्रव्याणीत्यर्थः। पुटादिषु लोहस्य पुटनादिकर्मसु। जलं प्रागेव कीर्त्तितं "मृदौ चतुर्गुणं देयं

लभ्यते स्वरसो येषां तेषां क्वाथोऽत्र नेष्यते ।
त्रिफलाव्यतिरेकेण मतमेतत् पतञ्जलेः ॥ ६३ ॥
एष एव विधिर्नित्यं चालनेऽपि प्रशस्यते ॥ ६४ ॥

अभ्रशोधनपरिभाषा ।—

लौहवत् त्रिफला व्योम्नि त्रिफलावत् पयो मतम् ।
प्राक्कीर्त्तितं जलञ्चात्र मृदुमध्यादिभेदतः ॥ ६५ ॥

क्वाथ्यद्रव्याणां त्रैविध्यनिर्देशः ।—

मृदुमध्यकठोरत्वात् क्वाथ्यद्रव्यं त्रिधा मतम् ।
क्वाथ्यद्रव्यानुसारेण देयं क्वाथ्यं जलं त्रिधा ॥ ६६ ॥

पतञ्जलिश्चाह सामान्यपरिभाषां लौहमारणार्थम् ।—

द्विगुणा त्रिफला लौहात् फलात् षोडशिकं जलम् ।
अष्टभागावशिष्टन्तु मारणे जलमिष्यते ॥ ६७ ॥
समा च त्रिफला ग्राह्या जलञ्चाष्टगुणं तथा ।
वधार्थे स्थापयेत तोयं तस्यार्द्धं वस्त्रशोधितम् ॥ ६८ ॥
वधार्थेन समं ग्राह्यं पाकार्थञ्च समं फलम् ।

---

कठिनेऽष्टगुणं तथा" इत्यादिना पूर्वोक्तम्। एष एव विधिर्नित्यं चालनेऽपि प्रशस्यते लौहस्य प्रक्षालनकर्मण्यपि त्रिफलाव्यतिरिक्तानां येषां स्वरसो लभ्यते, तेषां स्वरसेनैव प्रक्षालनं कर्त्तव्यं, न तु क्वाथेन, त्रिफलायास्तु क्वाथेनैव कर्त्तव्यम् इति ॥ ५७—६४ ॥

इदानीं लौहशोधनपरिभाषामभ्रेऽपि अतिदिशति, लौहवदिति।—व्योम्नि अभ्रे। पयः जलम्। प्राक् कीर्त्तितं "मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं तथा" इत्यादिना प्रागुक्तम्। अयमर्थः,—अभ्रमारणे कर्त्तव्ये लौहशोधनविधिवत् अभ्रात् द्विगुणां त्रिफलां गृहीत्वा चतुर्गुणजलेन पक्त्वा च अष्टावशेषं कुर्य्यात्, तेनैव अभ्रं शोधयेत्, एवं लौहवत् चालनादिकमपि कुर्य्यात्। एवं पुटादिकार्य्ये क्वाथे कर्त्तव्ये क्वाथ्यद्रव्यस्य मृदुमध्यादिभेदेन जलमपि चतुर्गुणादिकं दातव्यमिति ॥ ६५ ६६ ॥

लौहमारणे पतञ्जलिमतमाह, द्विगुणेति।—"फलात् षोडशिकं जलम्" इत्यत्र "क्षिपेत् षोडशिके जले" इति पाठान्तरम्। वधार्थेन समं ग्राह्या पाकार्थञ्च समं

अष्टभागावशिष्टञ्च पाकार्थं जलमिष्यते ॥
एवं जलं फलं प्रोक्तं यथासङ्ख्येन योजयेत् ॥ ६९ ॥

अथ लौहपाकलक्षणमाह, तदुक्तं पतञ्जलिना।—

तावल्लौहं पचेद्वैद्यो यावद्वस्त्रेण गालितम्।
समुद्रं जायते व्यक्तं न निःसरति सन्धिभिः ॥ ७० ॥

अन्यच्च।—

अङ्गुलिभ्यां निघृष्टन्तु यदा चूर्णत्वमागतम्।
तदा सिद्धं विजानीयाल्लौहं लौहविदां वरः ॥ ७१ ॥

अन्यच्च।—

अञ्जनाभं घनं स्निग्धं श्लक्ष्णभूतमलेपनम्।
अक्लिन्नमम्भसि क्षिप्तं सम्यक् पक्वस्य लक्षणम् ॥ ७२ ॥

असम्यक्पक्वलौहलक्षणम्।—

मन्दमाहुरथो लौहमलब्धाखिललक्षणम्।

---

फलं—यथार्थवत पाकार्थमपि समं लौहसमं फलं त्रैफलं ग्राह्यमित्यर्थः, अत्राद्यः सम-शब्द तद्वदित्यर्थे अव्ययं, द्वितीयः सम-शब्दः समानार्थे प्रयोज्यः। "पाकार्थञ्च "समं फलम्" इत्यत्र "पाकार्थञ्च जलं फलम्" इति पाठकल्पना सुखबोधानुकूला। यथासङ्ख्येन लौहमानानुसारेणेत्यर्थः ॥ ६७—६९ ॥

लौहस्य पाकसिद्धिलक्षणमाह, तावदिति।—समुद्रम् अङ्गुलीरेखायुक्तम्, सन्धिभिः वस्त्रच्छिद्रैरित्यर्थः। अयमर्थः,—वस्त्रोपरि संस्थाप्य अङ्गुलीभिर्घर्षणे कृते यदा अङ्गुलीरेखा लौहे मुद्रिता भवेत, तथा वस्त्ररन्ध्रे लिप्ता तिष्ठेत, न निम्नस्थपात्रे पतेत, तदा सुपक्वं लौहमिति विजानीयात् इति। "सन्धिभिः" इत्यत्र "ग्रन्थिभिः" इति पाठान्तरम्। "सिद्धम्" इत्यत्र "सिद्धिम्" इति पाठः नार्थसङ्गतः। अञ्जनाभं कज्जलाभं, घनं गाढ़ं, गाढ़कज्जलाभमित्यर्थः। श्लक्ष्णभूतं सुचिक्कणं, सुखस्पर्शमिति यावत्। "श्लक्ष्णभूतम्" इत्यत्र "श्लक्ष्णमुत्तमम्" इति पाठान्तरम्। अलेपनं नाङ्गुलिविलेपीत्यर्थः। अक्लिन्नमम्भसि क्षिप्तं जले निक्षिप्तं सत् न क्लिद्यति, उपरि प्लवते इत्यर्थः, वारितरमिति यावत् ॥ ७०—७२ ॥

आमपक्व-खरपक्वयोर्लक्षणमाह, मन्दमिति।—मन्दं हीनपक्वमित्यर्थः।

अतिपाकेन तज्ज्ञेयं खरमुज्झितलक्षणम् ॥ ७३ ॥

अमोघ-तन्त्रे चोक्तं—

त्रिविधपाकलक्षणम् ।—

पाकस्तु त्रिविधः प्रोक्तो मृदुमध्यमतीक्ष्णकः ।
त्रैविध्यात् सर्वधातूनां पित्तानिलकफात्मनाम् ॥ ७४ ॥
दर्व्यामाश्लिष्यते यत्तत् स्वैरं स्खलति वा न वा ।
मृदुपाकं विजानीयात् पित्ते तद्योज्य योजयेत् ॥ ७५ ॥
सिक्तापुञ्जोपमं यत् तु मूषिकेण समन्वितम् ।
तदयः खरपाकं स्यात् श्लेष्मण्येव प्रकीर्त्तितम् ॥ ७६ ॥
एकैकगुणयोगित्वान्न तदिच्छन्ति तद्विदः ।
सर्वप्रकृतिसेव्यत्वान्मध्यमं बहुपूजितम् ॥ ७७ ॥

गुडादिसहितलौहपाकलक्षणम् ।—

गुडादिः प्रविशेत् यत्र तत्र पाकोऽस्य मुद्रया ॥ ७८ ॥

अथ भावनाविधिः ।—

द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत् ।
तावत् प्रमाणं कर्त्तव्यं भिषग्भिर्भावनाविधौ ॥ ७९ ॥

खलस्याखिललक्षणम् अकस्मात्पूर्वोक्ताञ्जनाभादिलक्षणसमूहमित्यर्थः । उज्झित-लक्षणम् अतिक्रान्तलक्षणं, सम्यक्पाकलक्षणे सञ्जातेऽपि यदि पाकात् न विरमति तदा अतिक्रान्तलक्षणत्वात् खरपाकं भवतीत्यर्थः ॥ ७३ ॥

पाकविधौ अमोघतन्त्रवचनमाह, पाक इति ।—सर्वधातूनां लौहाभ्राद-प्राकारधातूनाम् । पित्तानिलकफात्मना, पुंसामिति शेषः, पित्तानिलकफात्मनां पुंसां त्रैविध्यात् सर्वधातूनां पाकस्तु मृदुमध्यमतीक्ष्णकास्त्रिविधः प्रोक्तः इत्यन्वयः । सिक्तापुञ्जोपमं वालुकाराशिसदृशम् । मूषिकेण समन्वितं मूषिकोत्खातमृत्तिका-तुल्यम् । "सिक्तापुञ्जोपमं यत्तु मूषिकेण समन्वितम्" इत्यत्र "सिकताभं भवेत् यत्तु वा मूषिकोत्करसन्निभम्" इति पाठकल्पना सुखबोधानुकूला । "सिक्ता" इत्यत्र "सिता" इति चक्रटीकायां शिवदासधृतपाठः । सर्वप्रकृतिसेव्यत्वात् वातादि-त्रिविधप्रकृतिसेव्यत्वात् ॥ ७४—७८ ॥

अथेदानीमौषधानां भावनाविधिमाह, द्रवेणेति ।—द्रव्यं चूर्णकल्कादिकं

अत्र जलं पाकार्थमष्टगुणं देयं ग्रन्थान्तरदर्शनात्। भाव्यद्रव्यसमं क्वाथ्यं क्वाथ्यादष्टगुणं जलम्।" इति पश्चाल्लिखितेन। केचित्तु अनुक्तजलपरिमाणे चतुर्गुणं जलं दत्त्वा द्रवत्वादिविदस्तु (?) अष्टांशशेषं गृह्णन्ति।

दिवा दिवाऽऽतपे शुष्कं रात्रौ रात्रौ च वासयेत्।
श्लक्ष्णं चूर्णीकृतं द्रव्यं सप्ताहं भावनाविधिः॥ ८०॥

ग्रन्थान्तरे च—

भावनार्थं क्वाथपाकविधिः।—

भाव्यद्रव्यसमं क्वाथ्यं क्वाथ्यादष्टगुणं जलम्।
अष्टांशशेषितः क्वाथो भाव्यानां तेन भावना॥ ८१॥

अथ क्षारोदकमाह।—

पानीयो यस्तु गुल्मादौ तं वारानेकविंशतिम्।
स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे॥ ८२॥

क्षारात् षड्गुणं जलं दत्त्वा वस्त्रेण दोलायन्त्रं विधाय तदधः पात्रं पातयित्वा क्षारोदकं ग्राह्यम्। एवमेकविंशतिवारं पुनःपुनः स्रावयित्वा ग्राह्यम्। अथवा केचिदाहुः क्षाराच्चतुर्गुणं जलं दत्त्वा चतुर्थावशिष्टे (?) स्रावयित्वा तज्जलं ग्राह्यम्।

अथ द्विरुक्तद्रव्यग्रहणम्।—

घृततैलादियोगे च यद्द्रव्यं पुनरुच्यते।
ज्ञातव्यं तदिहाचार्य्यैर्भागतो द्विगुणेन हि॥ ८३॥

आदिशब्देन चूर्णवटिकालेहप्रभृतिषु ज्ञेयमिति।

अथ चूर्णस्य पाकनिषेधमाह।—

प्रायो न पाकश्चूर्णानां भूरिचूर्णस्य तेन हि।

---

औषधद्रव्यम्। तावत्प्रमाणमित्यत्र द्रवमिति शेषः। वासयेत् स्थापयेदित्यर्थः। "वासयेत्" इत्यत्र "भावयेत्" इति पाठान्तरमसाधु। "श्लक्ष्णम्" इत्यत्र "शुष्कम्" इति पाठान्तरम्॥ ७९।८०॥

अथ क्वाथेन भावनाविधौ क्वाथ्यादीनां परिमाणमाह, भाव्येति।—अनेन विधिना क्वाथं कृत्वा तेन एकदिनं भावयितव्यम्, एवं सप्ताहम्॥ ८१॥

आसन्नपाके प्रक्षेपः स्वल्पस्य पाकमागते ॥ ८४ ॥

प्राय इति प्राचुर्य्येण, प्रचुरार्थे इति। आसन्नपाके इति उपस्थित-पाके, न तु पाकमापन्ने, तथा सति प्रचुरचूर्णानां प्रवेशो न स्यादित्यर्थः। स्वल्पस्य चूर्णस्य पाकान्ते, कटुष्णादशायां प्रक्षेप इति शेषः।

चूर्णादौ गुडस्य मात्रानिर्देशः।—

चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुडः ॥ ८५ ॥

पलशब्देन निर्देशे मात्रायहणविधिः।—

सङ्ख्या पलानां शतशः पलं प्रश्रूयते यतः।

तदा चाकृतिमानेन तेषान्तु ग्रहणं विदुः ॥ ८६ ॥

आकृतिमानेनेति यदनुरूपसङ्ख्या येषां तथा तेषां द्रव्याणां ग्रहणं विदुः, एतेन मृद्वादीनां द्वैगुण्यं नानुष्ठेयं, "पलोल्लेखागते माने न द्वैगुण्य-मिहेष्यते" इति वचनात्।

अथानुपानविधिमाह—

अनुपानाकरणे दोषनिर्देशः।—

स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनः।

भवत्याबाधजनकमनुपानमतः पिबेत् ॥ ८७ ॥

आबाधमिति आ सम्यक् प्रकारेण, बाधजनकं पीड़ाजनकमित्यर्थः।

अनुपानस्य हेतुनिर्देशः।—

यथा जलगतं तैलं क्षणेनैव प्रसर्पति।

---

पानीयचारविधिमाह, पानीय इति।—पानीय इत्यत्र चार इति शेषः ॥ ८२—८४ ॥

चूर्णादौ गुडस्य परिमाणं निर्दिशति, चूर्णे इत्यादि।—चूर्णसम इत्यत्र गुड इति शेषः। मोदके द्विगुणो गुड इत्यत्र सर्वचूर्णात् द्विगुण इत्यर्थः ॥ ८५ ॥

सङ्ख्येति।—यतः पलानां सङ्ख्या शतशः बहुवारान्, सर्वत्रैवेत्यर्थः, पलं प्रश्रूयते, पलमेव श्रूयते, न प्रस्थादिवत् द्वैगुण्येनेत्यर्थः, यद्वा—यतः शतशः-पलाना शतपलानामपीत्यर्थः, सङ्ख्या पल पलमेवेत्यर्थः, प्रश्रूयते, न तु प्रस्थाढकादिवत् द्वैगुण्येनेत्यर्थः, ततः तेषां पलानाम् चाकृतिमानेन स्वरूपेण, पलमानेनैव, न तु द्वैगुण्येनेत्यर्थः, ग्रहणं विदुः ॥ ८६ ॥

तथा भैषज्यमङ्गेषु प्रसर्पत्यनुपानतः ॥ ८८ ॥

अनुपानगुणाः।—

रोचनं बृंहणं वृष्यं दोषघ्नं वातभेदनम्।
तर्पणं मार्दवकरं श्रमक्लमहरं परम ॥ ८९ ॥
दीपनं दोषशमनं पिपासाच्छेदनं परम्।
रसवर्णकरञ्चापि अनुपानं सदोच्यते ॥ ९० ॥
वातापिर्भक्षितो येन अगस्त्येन द्विजोत्तम !।
अनुपानं कृतं तेन का कथा सर्वदेहिनाम् ॥ ९१ ॥
अनुपानं करोत्यूर्ज्जां तृप्तिं व्याप्तिं दृढां गतिम्।
अन्नसङ्घातशैथिल्य-विक्लित्तिजारणानि च ॥ ९२ ॥

व्याप्तिं शरीरव्यापनम्। विक्लित्तिर्विक्लिन्नता इत्यर्थः॥

दोषभेदे अनुपाननिर्देशः।—

स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम्।
कफेऽनुपानं रूक्षोष्णं क्षये मांसरसं पयः ॥ ९३ ॥

स्नेहपाने अनुपानविशेषः।—

उष्णोदकानुपानञ्च स्नेहानामथ शस्यते।
ऋते भल्लातकस्नेहात् तत्र तोयं सुशीतलम् ॥ ९४ ॥

अनुपानस्य कर्त्तव्यतायां युक्तिमाह, स्थिरतामिति।—स्थिरतां गतं यथाभुक्तं स्थितमित्यर्थः॥ ८७।८८॥

अनुपानस्य गुणमाह, रोचनमिति।—बृंहणं वर्द्धनं, पुष्टिजननमित्यर्थः। "दोषघ्नं वातभेदनम" इत्यत्र "दोषसङ्घातभेदनं" तथा "रसवर्णकरञ्चापि" इत्यत्र "बल्यं वर्णकरं सम्यक्" इति सुश्रुते पाठः। "रसवर्णकरञ्चापि अनुपानम" अत्रासन्धिस्तु छान्दसः। अनुपानस्यावश्यकर्त्तव्यतायां दृष्टान्तमाह, वातापिरिति।—वातापिः कश्चिदसुरविशेषः। ऊर्ज्जां बलम्। विक्लित्तिः क्लिन्नीभावः॥ ८९—९२॥

कस्मिन् दोषे कीदृग्-रसगुणवद्द्रव्यमनुपेयमित्याह, स्निग्धोष्णमिति।—"पयः" इत्यत्र "परम्" इति पाठान्तरम्॥ ९३।९४॥

अन्यच्च ।—

भल्लाततौवरे स्नेहे शीतमेव जलं पिबेत् ।
जलमुष्णं घृते पेयं यूषस्तैलेऽनुशस्यते ॥
वसामज्जासु मण्डः स्यात् सर्व्वेषूष्णमथाम्बु वा ॥ ९५ ॥

अन्यच्च ।—

सामान्यतोऽनुपाननिर्देशः ।—

शीतोष्णतोयासवमद्ययूष-फलाम्लधान्याम्लपयोरसानाम् ।
यस्यानुपानन्तु भवेद्धितं यत्तस्मै प्रदेयं त्विह मात्रया तत् ॥९६॥

अन्यच्च ।—

यूषो मांसरसो वाऽपि शालिमुद्गादिभोजिनाम् ।
मांसादीनां चानुपानं धान्याम्लं दधिमस्तु वा ॥ ९७ ॥

अथानुपानमात्रामाह ।—

अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥ ९८ ॥
गुड़क्षौद्रसितादीनां पलार्द्धञ्च विशेषतः ॥ ९९ ॥

पलमत्र सौश्रुतम् । *

---

अनुपानविषये मतान्तरमाह, भल्लातेति ।—भल्लाततौवरे स्नेहे भल्लातकफल-साधिते तुवरकसाधिते च स्नेहे इत्यर्थः । तत्र तुवरकस्य विज्ञानं यथोक्तं सुश्रुतसंहितायां—"पवैस्तु केशराकारैः कलायसदृशैः फलैः । वृक्षस्तुवरको नाम पश्चिमार्णवतीरजः ॥ चाक्षुष्यं तौवरकं कषाय कटुपाकि च । उष्णं कृमिज्वरा-नाह मोहोदावर्त्तनाशनम् ॥" इति । "तैले" इत्यत्र "स्नेहे" इति पाठान्तर-मसाधु, चरकाद्यसम्मतत्वात् । शीतोष्णशब्दो तोयेत्यनेनान्वीयेते, तेन शीततोयमुष्ण-तोयञ्चेत्यर्थः । फलाम्लं वीजपूरादिकम् । "फलाम्ल" इत्यत्र "फलाम्बु" इति पाठः सुश्रुतविरुद्धः । धान्याम्लं काञ्जिकम् । प्रकृतिपर्य्यालोचनया यस्य यदेव हितमनुबुध्येत, तस्मै तदेव यथामात्रया प्रदातव्यमित्यर्थः । "यूषः" इत्यत्र "पयः" तथा "मांसादीनाम्" इत्यत्र "माषादेः" इति पाठान्तरं सुश्रुते ॥ ९५—९७ ॥

दोषभेदेनानुपानमात्रामाह—अनुपानमिति ॥ ९८-९९ ॥

---

* पलमत्र सौश्रुतमिति मध्यमतिमाषात्मकमित्यर्थः ।

व्यक्तिभेदे मात्रानिर्देशः।—

दीप्ताग्नयो महाकायाः स्नेहसात्म्या महाबलाः।
विसर्पोन्मादगुल्मार्त्ताः सर्पदंष्ट्राविषार्दिताः॥
ज्येष्ठां मात्रां पिबेयुस्ते पलान्यष्टौ विशेषतः॥ १००॥

अथ लौहानुपानमाह।—

माहिषं गव्यमाजञ्च पयो ग्राह्यं त्रिधाऽयसि।
माहिषं भस्मके देयमाजं क्षीरं पुनर्मतम्॥ १०१॥
कोष्ठदोषे कफे श्वासे कासे चापि नवज्वरे।
गव्यमन्यत्र सर्वत्र समवारिप्रसाधितम्॥ १०२॥
सर्वत्र गव्यमेवेति मतमाह पतञ्जलिः।
अनुपानं प्रयोक्तव्यं लौहात् षष्टिगुणं पयः॥ १०३॥
यदा तु वर्द्धितं क्षीरं तदाऽर्द्धं भोजने पिबेत्।
दद्यात् समशने तस्य योऽत्यर्थं क्षीणपावकः॥ १०४॥

अथानुपानविशेषमाह।—

अनुपानं हिमं वारि यवगोधूमयोर्हितम्॥

---

दीप्ताग्न्यादीनां विशेषविधिमाह, दीप्ताग्नय इति।—ज्येष्ठा मात्रामुत्तमां मात्रामित्यर्थः॥ १००॥

अथ लौहसेवने कृते तस्यानुपानमाह, माहिषमिति।—अयसि लौहे, लौह-सेवने कृते इत्यर्थः। भस्मके तीक्ष्णाग्नौ, माहिषस्यात्यभिष्यन्दित्वात्, द्रव्यगुणे चाप्यग्नि-हितगुणदर्शनाच्च। अन्यत्र भस्मरोगादन्यत्र रोगे। समवारिप्रसाधितं तुल्यमानजलेन सह पक्वं, गव्यमित्यनेनान्वयः। सर्वत्र सर्वस्मिन् रोगे, भस्मके तथा कोष्ठदोषादौ चेति यावत्। यदेति।—लौहस्य मात्रावृद्ध्या यदा दुग्ध-स्यापि मात्रावृद्धिः कार्या, तदा लौहं सेवित्वा अर्द्धं दुग्धं भोजनकाले चार्द्धं दुग्धं सेव्यमित्यर्थः। अतिक्षीणाग्नेस्तु भोजनकाले एव देयं, न तु लौहसेवना-नुपानमित्यर्थः॥ १०१—१०४॥

दधिमण्डं विषे चौद्रेऽनुष्णं पित्तामयेऽपि च ॥ १०५ ॥

रोगविशेषे अनुपाननिषेधः ।—

ऊर्द्ध्वजत्रुगदे श्वास-कासोरःक्षतपीनसे ।

गीतभाष्यप्रसक्तेषु स्वरभेदे न तद्धितम् ॥ १०६ ॥

न पिबेत् श्वासकासार्त्तो रोगे चाप्यूर्द्ध्वजत्रुगे ।

क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥ १०७ ॥

अथ शिशोर्भेषजपरिमाणमाह ।—

प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका ।

अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः ॥ १०८ ॥

एकैकां वर्द्धयेत् तावत् यावत् संवत्सरो भवेत् ।

तदूर्द्ध्वं माषवृद्धिः स्यात् यावदाषोड़शाब्दिकः ॥ १०९ ॥

ततस्तु सप्ततिं यावत् कर्षमात्रां प्रयोजयेत् ।

एवमेव विभागोऽयं तदूर्द्ध्वं बालवत् क्रिया ॥ ११० ॥

जातस्य शिशोर्बालकस्य प्रथमे मासि भेषजस्य रक्तिका मात्रा मध्वादिभिर्लेढुं दातव्या । प्रथममासादारभ्य द्वादशमासपर्य्यन्तं मासं मासं प्रति रक्तिकैकावृद्धिः कार्य्या, * नात्र दशरक्तिकपरिमाणमाषकविभागः किन्तु संवत्सरपूर्णार्थं द्वादशरक्तिका मात्रा देयेति भावः ।

द्रव्यविशेषे दोषविशेषे च अनुपानविशेषमाह, अनुपानमिति ।—अनुष्णमित्यत्र वारि इति शेष. ॥ १०५ ॥

निषिद्धानुपानं रोगमाह, ऊर्द्ध्वेत्यादि ।—तत् अनुपानमित्यर्थः ॥ १०६।१०७ ॥

शिशोरौषधमात्रामाह, प्रथमे इति ।—मासैकवर्षीयशिशोः रक्तिका मात्रा, ततश्च मासि मासि रक्तिकावृद्धिं कृत्वा द्वितीयवर्षादौ माषैकवृद्ध्या षोडशे वर्षे कर्षमात्रा दातव्या, षोडशवर्षीयस्यापि बालत्वेनाभिधानात्, यदुक्तं वाग्भटे—

* नात्र दशरक्तिकपरिमाणमाषकविभागः; अयमर्थः,—द्वितीयवर्षमारभ्य षोडशवर्षपर्य्यन्त माषकवृद्ध्या षोडशमाषक यावत् देयमित्यग्रे वक्ष्यति, एतदनुसारेण प्रथममासादारभ्य दशममासपर्य्यन्त रक्तिकैकवृद्ध्या दशमे मासि माषकापरपर्य्याये दशरक्तिके सम्पूर्णे, एकादशे तथा द्वादशे च मासि माषकमानमेव न रक्षितव्य, किन्तु एकैकरक्तिवृद्ध्या द्वादशरक्तिकैव मात्रा कार्य्येत्यर्थः ।

तदूर्द्ध्वमिति द्वादशमासादूर्द्ध्वं, तेन द्वितीयवर्षे प्रथममासादारभ्य षोड़शवर्षपर्य्यन्तं माषकवृद्ध्या कर्षपूरणं कार्य्यम्। ततः षोड़शवर्षात् सप्ततिं यावत् तावदेव कर्षेणेव व्यवहारः। तदूर्द्ध्वं सप्ततेः परं यावज्जीवनपर्य्यन्तं बालवत्, मात्रा कार्य्येति शेषः।

अन्येऽप्याहुः,—

रक्तिमारभ्य कर्षन्तु मानं बालगदे मतम्।
कर्षादौ तु जलस्तुल्या क्वाथ्यस्य क्वाथिको मतः॥ १११॥

कर्षादाविति प्रागुक्तपरिभाषया "कर्षादौ तु पलं यावत् दद्यात् षोड़शिकं जलम्" इत्याख्यायेति शेषः।

अतिशिशौ औषधप्रयोगविधिः।—

यस्तु स्यात् क्षीरपो बालः कषायं पातुमक्षमः।
तदा भिषक् कुमारस्य तस्य धात्रीञ्च पाययेत्॥ ११२॥
ये गदानाञ्च ये योगाः प्रोक्ताः स्वे स्वे चिकित्सिते।
तेषां कल्केन संलिप्तौ कुमारं पाययेत् स्तनौ॥ ११३॥

त्रिविधबालनिर्देशः।—

त्रिविधाः कथिता बालाः क्षीरान्नोभयवर्त्तिनः।
स्वास्थ्य ताभ्यामदुष्टाभ्यां दुष्टाभ्यां व्याधिसम्भवः॥ ११४॥

बालास्तु त्रिविधा भवन्ति—क्षीरवर्त्ती, अन्नवर्त्ती, उभयवर्त्ती च; उभयवर्त्तीति क्षीरान्नाभ्यां द्वाभ्यां वर्त्तनं येषामिति।

अथ भैषज्यभक्षणकालमाह।—

भैषज्यकालो भक्तादौ मध्ये पश्चान्मुहुर्मुहुः।
सामुद्गं भक्तसम्भुक्तं ग्रासे ग्रासान्तरेऽष्टधा॥ ११५॥

---

"वयस्त्वाषोड़शाद्बालं तत्र धात्विन्द्रियौजसाम्। वृद्धिरासप्ततेर्मध्यं तत्राऽवृद्धिः परं क्षयः॥" इति॥ १०८—१११॥

अतिशिशौ औषधप्रयोगविधिमाह—य इत्यादि। शिशोस्त्रैविध्यमाह, त्रिविधा इति।—क्षीरान्नोभयवर्त्तिनः क्षीरवर्त्तिनः, अन्नवर्त्तिनः तथा क्षीरान्नोभयवर्त्तिन इत्यर्थः। ताभ्यां क्षीरान्नाभ्याम्॥ ११२—११४॥

रोगभेदे दोषभेदे च भैषज्यप्रयोगकालमाह, भैषज्येत्यादि।—मध्ये भक्तस्य मध्यभोजने। पश्चात् भोजनान्ते। सामुद्गं सम्पुटकमिव सम्पुटकमित्यर्थः,

रोगविशेषे औषधभक्षणकालः ।—

अपाने विगुणे पूर्वं समाने मध्यभोजने ।
व्याने तु प्रातरशनमुदाने भोजनोत्तरम ॥ ११६ ॥
वायौ प्राणे प्रदुष्टे तु ग्रासे ग्रासान्तं इष्यते ।
श्वासकासपिपासासु तत्तु कार्य्यं मुहुर्मुहुः ॥ ११७ ॥
सामुद्गं हिक्किने देय लघुनाऽन्नेन संयुतम् ।
सभोज्यं त्वौषधं भक्ष्यैर्विचित्रैररुचौ हितम ॥ ११८ ॥

सामुद्गमिति—"सामुद्गं भेषजं विद्यादन्नस्याद्यवसानयोः" इति ।

अन्ये त्वाहुः,—

अभक्तं पूर्वभक्तञ्च मध्यभक्तं सभक्तकम ।
भक्तोपरिष्टात् सामुद्गं भक्तस्यैवान्तरेऽपि च ॥ ११९ ॥
ग्रासे ग्रासान्तरे चैव मुहुर्मुहुरिति स्मृतः ।
काला दशैते धीमद्भिरौषधस्य समासतः ॥ १२० ॥

मतान्तरे रोगविशेषे औषधभक्षणकालः ।—

बलिनो महतो व्याधेरभुक्ते भेषजं हितम् ।
सर्वव्याधिहरं पथ्यं पूर्वभक्तं महौषधम् ॥ १२१ ॥
मध्यकायगतान् रोगान् मध्ये भक्तं निहन्ति च ।
सभक्तं सुकुमाराणां बालानामौषधद्विषाम् ॥ १२२ ॥
भक्तोपरिष्टात् शस्तञ्च ऊर्द्ध्वजत्रुविकारिणाम् ।
सम्बन्धे वर्चसां मुद्गं दीप्ताग्निबलिनां हितम् ॥ १२३ ॥
भक्तयोरन्तरे ज्ञेयं भोजनद्वयमध्यतः ।
तच्च नित्यं प्रयुञ्जीत मध्यदेहविकारिणाम् ॥ १२४ ॥

---

भोजनस्य आद्यन्तकाले सेवितयोरौषधयोर्मध्ये पतितस्य भुक्तद्रव्यस्य सम्पुटमध्य-स्थितत्वादिवेति यावत् । ग्रासान्तरे द्वयोर्ग्रासयोर्मध्ये । अपाने इत्यत्र वायाविति शेषः । पूर्वं भक्तादौ । समाने वायाविति बोध्यं, विगुणे इति शेषः । एवं व्यानोदानादावपि बोद्धव्यम् । अभक्तं प्रातरित्यर्थः । भक्तस्यैवान्तरे दिवाभोजनस्य

ग्रासे ग्रासे कषायाग्नीनां वाह्यासक्तधियामपि।
ग्रामान्तरे हितं विद्यात् कुष्ठमेहविकारिणाम् ॥ १२५ ॥
श्वासकासपिपासानां मत्तु कार्य्यं मुहुर्मुहुः ॥ १२६ ॥

अन्यच्च।—

भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः।
कषायांस्तु विशेषेण तत्र भेदस्तु दर्शितः ॥ १२७ ॥

भेदः पुनः कषायपानेन वा पयस्तु (?) प्रातः सायं मध्याह्ने रात्रौ च व्याधिविशेष-धातुविशेष-प्रकृतिविशेषतारतम्यतया देयमित्यर्थः।

प्रथमकालः।—

ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम्।
किञ्चित् सूर्य्योदये जाते तथा दिवसभोजने ॥ १२८ ॥
सायन्तने भोजने च मुहुश्चापि तथा निशि।
प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः ॥ १२९ ॥
लेखनार्थं च भैषज्य प्रभातेऽनन्नमाहरेत्।
एवं स्यात् प्रथमः कालो भैषज्यग्रहणे नृणाम् ॥ १३० ॥

द्वितीयकालः।—

भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते।
अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत् ॥ १३१ ॥
समानवाते विगुणे मन्देऽग्नावपि दीपनम्।

---

रात्रिभोजनस्य च मध्यभागे इति यावत्। मुहुः सामुहुर्म्। वाह्यासक्तधियां विषयासक्तचेतसाम। तत्र भेदस्तु दर्शितः, अयमभिप्रायः,—कषायपाने सामान्यतः प्रभातकालस्यैव प्रशस्तत्वेऽपि व्याध्यवस्थादिकं वीक्ष्य कालान्तरमपि प्राशस्त्येन गण्यते, यथा जीर्णज्वरहरनिदिग्धिकादिक्वाथः रात्रिज्वरे सायं दिवाज्वरे च प्रातः प्रयोज्यः, यदुक्तं चक्रटीकायां शिवदासेन—"तत्र रात्रिज्वरे सायमन्यत्र प्रातरिष्यते। श्वासकासविनाशाय मन्दाग्निदीपनाय च। अरुचेश्च निवृत्त्यर्थं प्रातरुत्थाय त पिबेत् ॥" इति। यथा वा माषबलादिक्वाथस्य सायं पेयत्वेनाभिधानम् इति ॥ ११५—१२७ ॥

उक्तमेवार्थं तन्त्रान्तरीयवचनेनाह, ज्ञेय इति।—लेखनार्थं कर्षणार्थं, यथा

दद्यात् भोजनमध्ये तु भैषज्यं कुशलो भिषक्॥ १३२॥
व्यानकोपे च भैषज्यं भोजनान्ते समाहरेत्।
हिक्काक्षेपककम्पेषु पूर्वमन्ते च भोजनात्॥
एवं द्वितीयकालश्च प्रोक्तो भैषज्यकर्मणि॥ १३३॥

तृतीयकालः।—

उदाने कुपिते वाते स्वरभङ्गादिकारिणि।
ग्रासे ग्रासान्तरे देय भैषज्यं सान्ध्यभोजने॥ १३४॥
प्राणे प्रदुष्टे सान्ध्यस्य भक्तस्यान्ते च दीयते।
औषधं प्रायशो धीरैः कालोऽयं स्यात् तृतीयकः॥ १३५॥

चतुर्थकालः।—

मुहुर्मुहुश्च तृट्छर्दि-हिक्काश्वासगरेषु च।
सान्नञ्च भेषजं दद्यादिति कालश्चतुर्थकः॥ १३६॥

पञ्चमकालः।—

ऊर्द्ध्वजत्रुविकारेषु लेखने बृंहणे तथा।
पाचने शमने देयमनन्नं भेषजं निशि॥
इत्ययं पञ्चमः कालः प्रोक्तो भैषज्यहेतवे॥ १३७॥

अथ क्रियाकालव्यवस्थामाह—

प्रशस्तक्रियायाः निर्देशः।—

या तूदीर्णं शमयति नान्यं व्याधिं करोति च।

---

स्यादित्यादौ। "सान्ध्यभोजने" तथा "सान्ध्यस्य" इत्यत्र "सात्म्यभोजने" तथा "सात्म्यस्य" इति पाठान्तरद्वयं प्रामादिकम्। ननु प्राणादिभेदेन पञ्चविधस्य वायोः प्रकोपे पृथक् पृथक् भैषज्यकालः प्रदर्शितः, पित्तकफयोस्तु पाचकालोचकादिभेदभिन्नयोः न तथा, तत् कथमिति चेदुच्यते—दोषेषु वायोरप्रतिवार्य्यवीर्य्यत्वादाशुकारित्वात् बहुविधविकारकारित्वाच्च प्राधान्येन पित्तकफयोरपि प्रकोपकत्वेन च वायोः पृथक् दर्शितः, न पित्तकफयोः; तथा च—"स्वयम्भुरेष भगवान् वायुरित्यभिशब्दितः। अचिन्त्यवीर्य्यो दोषाणां नेता रोगसमूहराट्॥" इति॥ १२८—१३७॥

अथ समासतश्चिकित्साविधिमाह, येति।—उदीर्णम् उद्धतं, प्रबलमित्यर्थः।

सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ॥ १३८ ॥

अन्यमिति ज्वरादीनाम् अन्यतमं न उदीरयेदिति न वर्द्धयेत्, न जनयेदित्यर्थः। तथा च चरकचिकित्साप्राभृतीयाध्याये—

याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः।

सा हि क्रिया विकाराणां कर्म तद्भिषजां मतम् ॥ १३९ ॥

भिषजां चिकित्सकानामित्यर्थः।

निन्दितक्रियायाः निर्देशः।—

अल्पे गदे महत् कर्म क्रिया लघ्वी महागदे।

द्वयमेतदकौशल्यं कौशल्यं युक्तकर्मता ॥ १४० ॥

क्रियासाङ्कर्य्यनिषेधः।—

क्रियायास्तु गुणालाभे क्रियामन्यां समाचरेत्।

पूर्वस्या शान्तवेगाया न क्रियासङ्करो मतः ॥ १४१ ॥

सङ्करो व्यामिश्रता। अतो मुख्यप्रयोगाणां मिश्रणम् एकस्मिन्नेव रोगिणि न कर्त्तव्यं, परस्परगुणविरोधात् भैषज्यगुणवैकल्यादग्निमान्द्य-जननत्वाच्च।

तथाऽपि साङ्कर्य्यमाह—

साङ्कर्य्यस्थलनिर्देशः।—

क्रियाभिस्तुल्यरूपाभिः क्रियासाङ्कर्य्यमिष्यते।

भिन्नरूपतया यास्तु ताः कुर्वन्ति न दूषणम् ॥ १४२ ॥

तुल्यरूपाभिः क्रियाभिः क्रियासाङ्कर्य्यमिष्यते, तु पुनः, ताः क्रियाः चेद्भिन्नरूपा भवन्ति तदा न साङ्कर्य्यमिति तु-शब्देनेतदुच्यते। अतो भिन्न-रूपतया अतुल्यरूपाभिः क्रियाभिर्न क्रियासाङ्कर्य्यं भवतीत्यर्थः। * एतेनैवं

धातवः वातादयः रसादयश्च, रसादीनामिव वातादीनामपि शरीरधारकत्वेन धातुशब्देनाभिधीयमानत्वात्। अल्पे गदे लघुव्याधौ, महत् कर्म गुरुव्याध्युपशामिनी चिकित्सा। क्रियायाः चिकित्साकर्मणः, प्राक्प्रयुक्तस्यौषधस्येति यावत्। पूर्वस्याः पूर्वप्रयुक्तायाः क्रियायाः, शान्तवेगायाः निवृत्तगुणायामित्यर्थः, पूर्वप्रयुक्तस्यौषधस्य क्रिया यदा मन्दीभवति तदा अन्या क्रिया समाचरेदित्यर्थः ॥ १३८—१४२ ॥

* व्याख्यानमिदं न सुष्ठुमनोहरम्।

बोधयति—पाचनघृतयोर्द्वयोर्गुड़वटकलेहगुड़िकादीनाञ्च पाचनयुक्ताना-मेकस्मिन्नेव रोगिण्येकदिने प्रयोगः कर्त्तव्यो यथा—व्याधेरनुपानं यद्यत् पाचनं विहितमिति; किन्तु भिन्नरूपेणौषधद्वयेन दोषप्रसङ्गः स्यादेव. (?) अतः परस्परविरोधित्वेन औषधद्वयकल्पना न कार्य्या, यथा गुड़िकाद्वये लेहद्वयमधिकमिति दिक्।

रसस्य परिणतौ दिनावधिनिर्देशः।—

षड्भिः केचिदहोरात्रैः केचित् सप्तभिरेव च।
इच्छन्ति मुनयः प्रायो रसस्य परिवर्त्तनम्॥ १४३॥

उचितक्रियाकालस्य अनुपेक्षणीयतानिर्देशः।—

शीते शीतप्रतीकार उष्णे चोष्णनिवारणम्।
कृत्वा कुर्य्यात् क्रिया प्राप्तां क्रियाकालं न हापयेत्॥१४४॥

सर्वञ्च रोगे प्रशमाय कर्म
हीनातिरिक्तं विपरीतकालम्।
मिथ्योपचाराच्च हि तद्विकारं
शान्तिं नयेत् पथ्यमपि प्रयुक्तम्॥ १४५॥

अथ पारिभाषिकीसंज्ञामाह—

चतुरम्लं पञ्चाम्लञ्च।—

वृक्षाम्लमातुलुङ्गाम्लौ बदराम्लाम्लवेतसौ।
चतुरम्लमिदं तद्धि पञ्चाम्लञ्च सदाड़िमम्॥ १४६॥

पञ्चलवणम्।—

सौवर्चलं सैन्धवञ्च विड्मौद्भिदमेव च।

रसस्य रसत्वेन परिणतौ दिनावधिमाह, षड्भिरिति।—रसस्य रसधातोः, यदुक्तं चरके—"षड्भिः केचिदहोरात्रैरिच्छन्ति परिवर्त्तनम्। सन्तत्या भोज्यधातूनां परिवृत्तिस्तु चक्रवत्॥" इति, यद्वा—रसस्य रसौषधस्येत्यर्थः॥ १४३॥

उपयुक्तकाले चिकित्साया अनुपेक्षणीयतामाह, शीते इति।—हापयेत् परि-त्यजेत्, अतिक्रामयेदिति यावत्॥ १४४।१४५॥

पारिभाषिकीं संज्ञामाह, वृक्षाम्लेत्यादि।—वृक्षाम्लं महाद्रंकम्। चौड़द "आम्लर"

सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ॥
एक-द्वि-त्रि-चतुः-पञ्च-लवणानि क्रमाद्विदुः ॥ १४७ ॥

अष्टमूत्रम् ।—

अविमूत्रमजामूत्रं गोमूत्रं माहिषञ्च यत् ।
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च ॥
इति प्रोक्तानि मूत्राणि यथासामर्थ्ययोगतः ॥ १४८ ॥

चतुःस्नेहाः ।—

सर्पिस्तैलं वसा मज्जा स्नेहोऽप्युक्तश्चतुर्विधः ।
पानाभ्यञ्जनवस्त्यर्थं नस्यार्थञ्चैव योगतः ॥ १४९ ॥

अष्टक्षीरम् ।—

अविक्षीरमजाक्षीरं गोक्षीरं माहिषञ्च यत् ।
उष्ट्रीणां हस्तिनीनाञ्च वडवायाः स्त्रियास्तथा ॥ १५० ॥

चातुर्जातक-त्रिजातके ।—

चातुर्जातं समाख्यातं त्वगेलापत्रकेशरैः ।
तदेव त्रिसुगन्धिः स्यात् त्रिजातकमकेशरम् ॥ १५१ ॥

सर्वगन्धः ।—

चातुर्जातककर्पूर-कक्कोलागुरुशिह्लकम् ।
लवङ्गसहितञ्चैव सर्वगन्धं विनिर्दिशेत् ॥ १५२ ॥

त्रिफलाद्वयम् ।—

पथ्या बिभीतकं धात्री महती त्रिफला मता ।
स्वल्पा काश्मर्य्यखर्जूर-परूषकफलैर्भवेत् ॥ १५३ ॥

इति प्रसिद्धम्। सामुद्रं "करकच" इति ख्यातम्। अविमूत्रं मेषीमूत्रम्। वडवायाः अश्विन्याः। त्वक् "दारुचिनि" इति ख्यातम्। पत्रं तेजपत्रम्। केशरं नागकेशरः। तदेव चातुर्जातकमेव। अकेशरं नागकेशररहितम्। शिह्लकं "शिलारस" इति प्रसिद्धम्। काश्मर्य्यं गाम्भारी। परूषकं "फलसा" इति ख्यातम्।

त्र्यूषणं, त्रिमदश्च।—

पिप्पली शृङ्गवेरञ्च मरिचं त्र्यूषणं विदुः।
विड़ङ्गमुस्तचित्रैश्च त्रिमदः समुदाहृतः॥ १५४॥

पञ्चक्षीरिवृक्षाः।—

उडुम्बरो वटोऽश्वत्थो वेतसः प्लक्ष एव च।
पञ्चैते क्षीरिणो वृक्षाः संज्ञायां समुदाहृताः॥ १५५॥

वेतसोऽत्र गन्धिन इति ख्यातः, गन्धमुस्त इत्युत्तरदेशे यस्य प्रसिद्धिः। प्लक्ष इति वटः, अथवा पर्कटीत्यश्वत्थभेदः।

पञ्चपल्लवम्।—

आम्र जम्बू-कपित्थानां वीजपूरकविल्वयोः।
गन्धकर्मणि सर्वत्र पत्राणि पञ्चपल्लवम्॥ १५६॥

पञ्चकोलम्।—

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम्।
पञ्चकोलमिदं प्राहुः पञ्चोषणमथापरे॥ १५७॥

षडूषणम्।—

पञ्चकोलं समरिचं षडूषणमुदाहृतम्॥ १५८॥

महत् पञ्चमूलम्।—

विल्वश्योणाकगाम्भारी-पाटलागणिकारिका।
एतन्महत् पञ्चमूलं संज्ञया समुदाहृतम्॥ १५९॥

स्वल्पपञ्चमूलं दशमूलञ्च।—

शालपर्णी पृश्निपर्णी वृहतीद्वयगोक्षुरम्।
कनीयः पञ्चमूलं स्यात् उभयं दशमूलकम्॥ १६०॥

तृणपञ्चमूलम्।—

कुशः काशः शरो दर्भः इक्षुश्चैव तृणोद्भवम्।
पञ्चतृणमिदं ख्यातं तृणजं पञ्चमूलकम्॥ १६१॥

शृङ्गवेरं शुण्ठी। शाखाक्ये तु "वेतसः" इत्यत्र "मधुकं" पठित्वा पञ्च क्षीरिवृक्षाः व्याख्याताः। वीजपूरकः "विजौरा" इति ख्यातः जम्बीरभेदः। गन्धकर्मणि, तैलादीनामिति शेषः। वृहतीद्वयं वृहती कण्टकारी च। कनीयः स्वल्पम्।

वल्लीपञ्चमूलम्।—

विदारी चाजशृङ्गी च रजनी सारिवाऽमृतम्।
वल्लीजं पञ्चमूलञ्च कथितं मुनिपुङ्गवैः॥ १६२॥

कण्टकपञ्चमूलम्।—

करमर्दः श्वदंष्ट्रा च हिंस्रा झिण्टी शतावरी।
कण्टकाख्यं पञ्चमूलं निर्दिष्टं सूक्ष्मबुद्धिभिः॥ १६३॥

करमर्दः करञ्जः। श्वदंष्ट्रा गोक्षुरकः। हिंस्रा कुड़वकाली, कालियाकड़ा।
स्पष्टमन्यत्।

अष्टवर्गः (जीवनीयाष्टकम्)।—

ऋद्धिर्वृद्धिश्च मेदे द्वे तथर्षभकजीवकौ।
काकोली-क्षीरकाकोलीत्यष्टवर्गः प्रकीर्त्तितः॥ १६४॥

जीवनीयगणः।—

अष्टवर्गश्च पर्ण्यौ जीवन्ती मधुकं तथा।
जीवनीयगणः प्रोक्तो जीवनश्च पुनस्ततः॥ १६५॥

श्वेतमरिचं, ज्येष्ठाम्बु सुखोदकञ्च।—

शोभाञ्जनस्य यद्बीजं तत् श्वेतमरिचं स्मृतम्।
ज्येष्ठाऽम्बु तण्डुलाम्बु स्यात् उष्णाम्बु च सुखोदकम्॥ १६६॥

गुड़ाम्बु।—

गुड़योगात् गुड़ाम्बु स्यात् गुडवर्णरसान्वितम्॥ १६७॥

वेशवारः।—

निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितम्।
कृष्णा-मरिचसंयुक्तं वेशवार इति स्मृतः॥ १६८॥

अम्लमूलकम्।—

काञ्जिकव्युषितं पक्वं मूलकं त्वम्लमूलकम्॥ १६९॥

---

विदारी विदारीकन्द, "भूमिकुष्माण्ड" इति लोके। अजशृङ्गी कर्कटशृङ्गी। रजनी हरिद्रा। सारिवा अनन्तमूलम्। अमृतं गुडूची। "हिंस्रा" इत्यत्र "अहिंस्रा" इति पाठान्तरम्। पर्ण्यौ मुद्गपर्णी माषपर्णी च। मधुकं यष्टिमधु। व्युषितं पर्य्युषितं,

कट्वरं विविक्तकञ्च ।—

दध्नः ससारकस्यात्र तक्रं कट्वरमिष्यते ।
तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्जलम् ॥ १७० ॥

दधिकूर्चिका तक्रकूर्चिका च ।—

दध्ना सह पयः पक्वं सा भवेद्दधिकूर्चिका ।
तक्रेण पक्वं यत् क्षीरं सा भवेत्तक्रकूर्चिका ॥ १७१ ॥

शुक्तम् ।—

कन्दमूलफलादीनि सस्नेहलवणानि च ।
यत्र द्रवेऽभिषूयन्ते तच्छुक्तमभिधीयते ॥ १७२ ॥

शीधुः, आसवः, मैरेयम् ।—

शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ।
मैरेयं धातकीपुष्प-गुडधान्याम्लसंहितम् ॥ १७३ ॥

आरनालम् ।—

आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः ।
पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः ॥ १७४ ॥

अम्लवटकाः ।—

मन्थनी नूतना धार्य्या कटुतैलेन लेपिता ।
निर्मलेनाम्बुनाऽऽपूर्य्य तस्यां चूर्णं विनिक्षिपेत् ॥ १७५ ॥
राजिकाजीरलवण-हिङ्गुशुण्ठीनिशाकृतम् ।

काञ्जिकाधःस्थितं मूलकमम्लमूलकमित्यर्थः । ससारकस्य अनुद्धृतनवनीतस्य । पादाम्बु-अर्द्धाम्बुनिर्जलमिति पदत्रयं तक्रादिभिस्त्रिभिः क्रमेण योजनीयम् । कूर्चिका "छाना" इति भाषा । अभिषूयन्ते सन्धानीक्रियन्ते, कालान्तरेणाम्लीभूतानि जायन्ते इत्यर्थः । शीधुरिति—क्वथित् पक्वः इक्षुरसः मृत्पात्रे सन्धानीकृतः शीधुरिति ज्ञेयः । अपक्वः इक्षुरसः तथाभूतः आसव इति ज्ञेयः; अयञ्चासवः "यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः" इत्युक्तादासवादन्यो ह्यासवः । मैरेये धान्याम्लं काञ्जिकम् । आमैरपक्वैः । सन्धितैः कालान्तरेणाम्लीभूतैरित्यर्थः । सौवीरं वक्ष्यमाणम् । मन्थनी कलसीत्यर्थः । निक्षि

निक्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्च मुद्रयेत् ॥
ततो दिनत्रयादूर्द्ध्वमम्लाः स्युर्वटका ध्रुवम् ॥ १७६ ॥

कृशरा लिशरा वा ।—

तिलतण्डुलमाषैश्च कृशरा त्रिशरेति सा ॥ १७७ ॥

स्वल्पचुक्रम् ।—

यन्मस्त्वादि शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं स्वल्पचुक्रं तदुच्यते ॥ १७८ ॥

आसवारिष्टयोर्लक्षणम् ।—

यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः ।
अरिष्टः क्वाथसिद्धः स्यात् सम्पक्वो मधुरद्रवैः ॥ १७९ ॥

शीधुमाह ।—

आप्लुतस्यापि शीधुः स्यादित्याहुस्तद्विदो जनाः ॥ १८० ॥

आप्लुत इति सम्यक् पक्वः ।

सुरायाः प्रकारभेदे नामानि ।—

सुरामण्डः प्रसन्ना स्यात् ततः कादम्बरी घना ।
तदधो जगलो ज्ञेयो मेदको जगलाद्घनः ॥ १८१ ॥
वक्कसो हृतसारः स्यात् सुराबीजञ्च किण्वकम् ।
यत्तालखर्ज्जूररसैः सन्धिता सैव वारुणी ॥ १८२ ॥

गुड़ेक्षुमृद्वीकाशुक्तानि ।—

गुड़ाम्बुना सतैलेन कन्दशाकफलैस्तथा ।
आप्लुतं चाम्लतां जातं गुड़शुक्तं तदुच्यते ॥ १८३ ॥
एवमेवेक्षुशुक्तं स्यात् मृद्वीकासम्भवं तथा ॥ १८४ ॥

---

हरिद्रा। वटकान् पिष्टविदलकृतान् "बड़ा" इति ख्यातान्। स्वल्पचुक्रे गुड़ादिमानम् उत्तरोत्तरं द्विगुणं ग्राह्यं, यदुक्तं चक्रसङ्ग्रहे—"द्विगुणं गुड़मध्वारनालमस्तु क्रमादिह"। मस्त्वादि-शब्दात् दधि तक्रञ्च ग्राह्यमिष्यते। त्रिरात्रस्थमिति घर्मकालाभिप्रायेण, वर्षादिषु च कालावस्थयाष्टषड्रात्रं स्थापनीयं, यावता वा अम्लीभवति इति। "स्वल्पचुक्रम्" इत्यत्र "शुक्तं चुक्रम्" इति चक्रधृतः पाठः। वारुणी

तुषाम्बु-सौवीरादीनि ।—

तुषाम्बु चाम्नृतं ज्ञेयमामैर्विंदलितैर्यवैः ।
सुनिस्तुषैश्च पक्वैश्च सौवीरं चाम्नृतं भवेत् ॥ १८५ ॥
कुल्माषो धान्यमण्डेन चाम्नृतं काञ्जिकं भवेत् ॥ १८६ ॥

अन्यत् यदाह चरकः,—

तुषोदकम् ।—

मृष्टान्माषतुषान् सिद्धान् यवचूर्णसमन्वितान् ।
आम्नृतानम्भसा तद्धज्जातं तच्च तुषोदकम् ॥ १८७ ॥

काञ्जिकम् ।—

आशुधान्यं चोदितञ्च बालमूलन्तु खण्डशः ।
कृतं प्रस्थमितं पात्रे जलं तत्राढ़कं क्षिपेत् ॥ १८८ ॥
तावत् सन्धीय संरक्षेत् यावत् अम्लत्वमागतम् ।
काञ्जिकं तत्तु विज्ञेयमेतत् सर्वत्र पूजितम् ॥ १८९ ॥

शिण्डाकी ।—

शिण्डाकी चासुता ज्ञेया मूलकैः सर्षपादिभिः ॥ १९० ॥

मधुशुक्तम् ।—

जम्बीरस्वरसप्रस्थं मधुनः कुड़वं तथा ।
तावच्च पिप्पलीमूलादेकोकृत्य घटे क्षिपेत् ॥
धान्यराशौ स्थितं मासं मधुशुक्तं तदुच्यते ॥ १९१ ॥

खड़यूषकाम्बलिकयोर्लक्षणम् ।—

तक्रं कपित्थचाङ्गेरी-मरिचाजाजिचित्रकैः ।
सुपक्वः खड़यूषोऽयमयं काम्बलिकोऽपरः ॥
दध्यम्लो लवणस्नेह-तिलमाषसमन्वितः ॥ १९२ ॥

---

"ताडी" इति ख्यातम् । मधुशुक्ते तावच्च पिप्पलीमूलादिति पिप्पली-मूलस्यापि कुड़वं ग्राह्यमित्यर्थः । खड़यूषे तक्रप्रस्थे मरिचादीनां तीक्ष्णत्वादल्पमानं कपित्थचाङ्गेर्योर्मृदुवीर्यत्वात् बहुमानं दत्त्वा मुद्गादयः साध्याः,

प्रमथ्या तर्पणञ्च।—

संज्ञा प्रमथ्या विहिता योगे दीपनपाचने।

द्रवेणालोड़ितास्ते स्युस्तर्पणं लाजशक्तवः॥ १९३॥

मन्थः।—

शक्तवः सर्पिषा युक्ताः शीतवारिपरिप्लुताः।

नात्यच्छा नातिसान्द्राश्च मन्थ इत्यभिधीयते॥ १९४॥

उष्णोदकम्।—

क्वाथ्यमानन्तु यत्तोयं निष्फेनं निर्मलीकृतम्।

भवत्यर्द्धावशिष्टन्तु तदुष्णोदकमिष्यते॥ १९५॥

भेषजनामानि।—

चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम्।

प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम्॥ १९६॥

विद्याद्भेषजनामानि तच्चापि द्विविधं स्मृतम्।

स्वस्थस्योजस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत्॥ १९७॥

इति परिभाषाप्रदीपे तृतीयः खण्डः।

---

## चतुर्थः खण्डः।

---

अथ पञ्चकर्माण्याह—

संशोधनप्रशंसा।—

दोषाः कदाचित् कुप्यन्ति जिताः कालेन पाचनैः।

शूषयोनित्वात् मुद्गादीनाम्। खडयूषस्यैव दध्यादियोगात् काम्बलिकसंज्ञा ज्ञातव्या। दध्यम्लः दध्ना अम्लीकृतः॥ १४६—१९५॥

औषधपर्य्यायमाह—चिकित्सितमिति॥ १९६।१९७॥

इति परिभाषाप्रदीपे तृतीयखण्डव्याख्या समाप्ता।

---

यथाशास्त्र सुप्रयुक्तमपि भेषजं विना पञ्चकर्म न सम्यक्फलदं जायते, अतः पञ्चकर्म विवक्षुरादौ तस्य सामान्यतः उपयोगितामाह, दोषा इति।—कालेन किञ्चित्-

ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥ १॥

पाचनैरिति लङ्घनपाचनादिभिर्दोषप्रहारिभिरित्यर्थः।

पञ्चकर्मणां नाम।—

वमनं रेचनं नस्यं निरूहश्चानुवासनम्।

ज्ञेयं पञ्चविधं कर्म मात्रा तस्य प्रयुज्यते ॥ २ ॥

शोधनसंज्ञाया हेतुः।—

यदावहेत् वहिर्दोषान् पञ्चधा शोधनं हि तत् ॥ ३ ॥

नस्यादिप्रयोगे वयोनिर्देशः।—

न नस्यं न्यूनसप्ताब्दे नातीताशीतिवत्सरे।

न चोनद्वादशे धूमः कवलो नोनपञ्चमे ॥ ४ ॥

न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ।

न न्यूनषोडशेऽतीते सप्ततौ रक्तमोक्षणम् ॥

आजन्ममरणात् शस्तः प्रतिमर्षस्तु सर्वदा ॥ ५ ॥

---

कालान्तरमित्यर्थः। पाचनैः दोषपाचकौषधैः। संशोधनैः वमनविरेचनादिभिः पञ्चकर्मरूपैः ॥ १ ॥

पञ्चकर्मणां नामान्याह, वमनमिति।—रेचनं विरेचनम्। निरूहः आस्थापनं, रूक्षवस्तिरित्यर्थः। अनुवासनं स्नेहवस्तिः। मात्रा व्याधिवयोबलाद्यनुरूपमात्रा इति यावत् ॥ २ ॥

वमनादीनां शोधनसंज्ञात्वे हेतुमाह, यदिति।—यत् कर्म दोषान् वहिरावहेत् शरीराभ्यन्तरात् वहिर्निःसारयेत, तत् शोधनं, ज्ञेयमिति शेषः। तच्च पञ्चधा ॥ ३ ॥

वमनादीनां तथा शोधनविशेषत्वात धूमकवलरक्तमोक्षणानामपि प्रयोगयोग्यं वयो निर्देष्टुमाह, नेति।—अत्र धूमकवलरक्तमोक्षणानामपि दोषनिःसारकत्वेन देहशुद्धिकरत्वात् शोधनपञ्चकेषु मध्ये पाठो न दोषावह इति मन्तव्यम्। "न शुद्धिरूनदशमे" इत्यत्र शुद्धिर्वमनरूपा शुद्धिर्ज्ञातव्या, "रेचनं पञ्चमात् वर्षात् धूमन्तु द्वादशात् परम्" इत्यनेन पञ्चमवर्षादूर्द्ध्वं विरेचनविधानदर्शनात्। प्रतिमर्षः नस्यभेदः, तद्विधानमग्रे वक्ष्यति स्वयमेव ॥ ४।५ ॥

तत्रादौ वमनमाह—

वमनप्रयोगविधिः।—

पूर्वाह्ने पाययेत् पीतो जानुतुल्यासने स्थितः।
तन्मना जातहृल्लास-प्रसेकश्छर्दयेत् ततः॥ ६॥

चरकस्त्वाह—

शोधनप्रयोगार्हमासः।—

माधवप्रथमे मासि नभस्यप्रथमे पुनः।
सहस्यप्रथमे चैव वाहयेद्दोषसञ्चयम्॥ ७॥

माधवप्रथमे मासीति वैशाखप्रथमे भागे, भाद्रस्य प्रथमे, पौषस्य प्रथमे च, दोषसञ्चयं दोषाणां सञ्चयम् उपचयं वाहयेत् सारयेदित्यर्थः।

अन्यच्च।—

मधौ सहे च नभसि मासि दोषांस्तु वाहयेत॥ ८॥

मधौ चैत्रे मासि, सहे अग्रहायणे, नभसि श्रावणे दोषान् वाहये दित्यर्थः।

अत्युष्णादिकाले शोधनस्याकर्त्तव्यता।—

अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः।
औषधस्य शरीरस्य ते भवन्ति विकल्पकाः॥ ९॥

विकल्पका इति विरुद्धकार्य्यजनकाः।

---

वमनविधिमाह, पूर्वाह्णे इति।—पाययेत्, वमनयोगमिति शेषः। जानुतुल्यासने जानुप्रमाणोन्नतासने। तन्मना वमनविषये एव दत्ताभिनिवेशः। प्रसेकः मुखात् जलनिःसरणम्॥ ६॥

वमनाद्युपयोगिकालमाह, माधवेति।—वाहयेत्, वमनादिनेति शेषः। "वाहयेत्" इत्यत्र "हारयेत" इति पाठान्तरम्। केचित्तु माधवप्रथमे इत्यादीनामेवमर्थं कुर्वन्ति, तद्यथा—माधवस्य वैशाखस्य प्रथमे पूर्वस्मिन् मासि चैत्रे, नभस्यस्य भाद्रपदस्य प्रथमे श्रावणे, सहस्यस्य पौषस्य प्रथमे अग्रहायणे इत्यर्थः; पक्षेऽस्मिन् "मधौ" इत्यादि वक्ष्यमाणवचनमनुगृहीतं भवेदिति॥ ७।८॥

संशोधनानुपयोगिकालमाह, अत्युष्णेति।—हिमागमः हेमन्तः। विकल्पकाः व्यापत्तिजनकाः, कालस्यात्युष्णवर्षशीतत्वात् द्रव्याणां वीर्य्याल्पभावात् अत्यर्थं गुरुत्वादित्वाच्च, यदुक्तं सुश्रुते—"तत्र वर्षासु ओषधयस्तरुण्योऽल्पवीर्य्याः" इत्यादि।

उपयुक्तकालमाह—

साधारण-ऋतुत्रयनिर्देशः।—

प्रावृट् शुचिनभौ ज्ञेयौ शरदूर्जसहौ पुनः।
फाल्गुनश्च मधुश्चैव वसन्तः शोधनं प्रति ॥
स्वस्थवृत्तिमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥ १० ॥

सम्यक्वमनलक्षणम्।—

क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यक् वमितः स इष्टः।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तनोर्लघुत्वेऽपि च लक्ष्यमाणे ॥११॥

आमाशयस्थः कफस्तस्मात् कफस्थत्या तस्य प्रथमोद्गिरः, ततस्तदधः पित्ताशयस्तस्मात् पित्तं, पक्वाशयस्तदधस्ततोऽनिलः एति आगच्छति, क्रमादित्यनुक्रमात्।

---

"ता एवौषधयः कालपरिणामात् परिणतवीर्य्या बलवत्यो हेमन्ते भवन्ति, आपश्च प्रसन्नाः स्निग्धाः अत्यर्थं गुर्व्यः" इत्यादि। "ता एवौषधयः निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्ति" इत्यादि ॥ ९ ॥

संशोधनोपयोगिकालमाह, प्रावृडित्यादि।—शुचिः आषाढ़ः। नभः श्रावणः। ऊर्जः कार्त्तिकः। सहः अग्रहायणः। मधुः चैत्रः। शोधनं प्रति वमनादिक-मुद्दिश्य एतत् साधारणम् ऋतुत्रयं ज्ञातव्यम्; यदाह चरकः,—"अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः। तदन्तरे प्रावृडाद्याः ज्ञेयाः साधारणास्त्रयः॥" इति, अत्र साधारणा इति अनुद्भूतोष्णशीतवर्षा इत्यर्थः, साधारण ऋतौ वमनादीनामुत्सर्ग-सिद्धत्वात् इति। सुश्रुतेऽप्युक्तं—"वर्षाहिमन्तग्रीष्मेषु सञ्चितानां शरद्वसन्तप्रावृट्सु च प्रकुपितानां दोषाणां निर्हरणं कर्त्तव्यम्। हरेत् वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत। वर्षासु शमयेत् वायुं प्राग्विकारसमुच्छ्रयात्॥" इति, अत्र वर्षाशब्देन प्रावृट्। स्वस्थवृत्तिं स्वस्थचर्य्यां, स्वस्थस्य स्वास्थ्यरक्षणार्थं कालेष्वेतेषु वमनादिर्विधेयः। व्याधौ व्याध्यवस्थायां पुनः व्याधिवशेन व्याध्यनुसारेण, यदा वमनादिकं कर्त्तव्यं बुध्येत, तदैव कारयेदिति ॥ १० ॥

वमनस्य सम्यग्योगलक्षणमाह, क्रमादिति।—क्रमादिति वचनेन यथोक्त-क्रमलङ्घनेन कफाद्यागमनं न सम्यग्योगलक्षणमिति बोधयति; अतः कफादूर्द्ध्वं यदा पित्तं गतं स्यात्, तदा तत्पित्तागमनेऽपि वान्ते श्

वमनगुणाः।—

कफप्रसेकस्वरभेदतन्द्रा-निद्राऽऽस्यदौर्गन्ध्यविषोपसर्गाः।

गुरुत्वकासग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः कदाचित् ॥१२॥

असम्यग्वमिति दोषमाह—

दुश्छर्दिते स्फोटककोठकण्डू-

हृत्खाविशुद्धिर्गुरुगात्रता च।

हृत् हृदयं, खमिन्द्रियम्, एतयोरविशुद्धिरित्यर्थः, अतः सर्वेन्द्रियखाविशुद्धित्वं सामान्यात्।

अतिवमिति दोषमाह—

तृण्मोहमूर्च्छाऽनिलकोपनिद्रा-

बलातिहानिं वमितेऽति विद्यात् ॥ १३ ॥

क्रियाया उपयुक्तकालस्य अनुपेक्षणीयता।—

स्वस्थवृत्तिमभिप्रेत्य व्याधौ व्याधिवशेन तु।

कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ॥

प्रयोजयेत् क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ १४ ॥

अथ वमनभेषजमात्रामाह—

क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके।

शुद्धिः, किन्तु यदैवामाशयाभोगतं पित्तं वमनमानयति तदैव शुद्धिः, तच्च पित्तानयनं कफानयनानन्तरमेव भवति। अनेनान्तिकी तथा हृत्पार्श्वेत्यादिना लैङ्गिकी शुद्धिः प्रदर्शिता इति ज्ञातव्यम्। इन्द्रियमार्गं चक्षुरादिस्रोतांसि ॥ ११ ॥

सम्यग्वमनस्य गुणमाह—कफेति ॥ १२ ॥

वमनस्य अयोगे अतियोगे च दोषमाह, दुश्छर्दिते इति।—दुश्छर्दिते असम्यग्वमिते। हृत्खाविशुद्धिः हृदः हृदयस्य, खानाम इन्द्रियस्रोतसाञ्च, अविशुद्धिः हार्दिन्द्रियाणां गौरवमित्यर्थः ॥ १३ ॥

शोधनार्हे व्याधौ निषिद्धकालेऽपि शोधनस्यावश्यकर्त्तव्यतामुपादिशति, स्वस्थे ति। —अतिशीतादिकालेषु शोधनार्हे आत्ययिके व्याधौ शीतोष्णादीनां यथायथं प्रतीकारं कृत्वा उपयुक्तां क्रियां कुर्य्यात, न तु उपयुक्तकालम औदासीन्येनातिवाहयेत् इति। स च प्रतीकारो यथायथमुष्णशीतोपचारादिरूप इत्यर्थः ॥ १४ ॥

चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत् ॥ १५ ॥

मतान्तरे मात्रानिर्देशः।—

क्वाथ्यद्रव्यपले वारि प्रस्थार्द्धं पादशेषितम्।

कर्षं प्रदाय कल्कस्य मधुसैन्धवयोस्तथा ॥

सुखोष्णं वितरेद्धान्तौ मधूष्णं स्यान्न दोषकृत् ॥ १६ ॥

वमने उष्णमधुनः अदोषत्वे हेतुः।—

प्रच्छर्द्दने निरूहे च मधूष्णं न विरुध्यते।

अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्त्तयेत् ॥ १७ ॥

यात्यधो दोषमादाय पच्यमानं विरेचनम्।

गुणोत्कर्षात्तु यात्यूर्द्ध्वमपक्वं वमनं पुनः ॥ १८ ॥

* तयोरिति वमनविरेकयोः पक्वापक्वयोरित्यन्वयः (?)।

वमननिषेधमाह।—

अथ वमनयोगे कर्त्तव्ये क्वाथ्यादीनां मानमाह, क्वाथ्येति।—अपयित्वा क्वाथयित्वा ॥ १५ ॥

मतान्तरमाह, क्वाथ्यद्रव्यपले इति।—क्वाथ्यद्रव्यपले प्रस्थार्द्धे द्रवद्वैगुण्यात् शरावद्वय, वारि दत्त्वा पादशेषितं कुर्य्यादित्यर्थः। मधुसैन्धवयोस्तथा इति कर्षमित्यर्थः। सर्वत्रैव मधुन उष्णे प्रयोगो निषिद्धः, वमनयोगे तु तत्प्रयोगो न दोषमावहति इत्याह मधूष्णमिति।—वमनस्य अपक्वस्यैव ऊर्द्ध्वगमनात् उष्णमधुनः अदोषावहत्वं, यतः जाठराग्निपाके हि विरोधो भवतीति ॥ १६ ॥

दोषाभावे हेतुमाह, प्रच्छर्द्दने इति।—निरूहे आस्थापने। अलब्धपाकम् अप्राप्तपाकं, जाठराग्निना अपक्वमेवेत्यर्थः। तयोः प्रच्छर्द्दननिरूहयोः। निवर्त्तयेत् निःसारयेत्, पीतो वमनयोग इति शेषः। उष्णं मधु जाठराग्निना पक्वं धातुभिः सहैकीभूतमनर्थाय भवति, वमनयोगे तु आश्वेव पीतस्य तस्योष्णमधुनो बहिर्निर्गमनात् पाकाप्राप्त्या न दोषवत्त्वमिति। तत्रास्तु कदाचित् अयोगे पाकाशङ्कया मधु नैव प्राप्नुवन्तीति। विरेचने तु तथा न भवति इत्यतः तत्र मधुन उष्णस्य प्रयोगो दोषावहो निषिद्धश्च ॥ १७।१८ ॥

* मूलमिदं दुर्बोध्यमसलग्नञ्च ; मन्ये, तयोरिति वमननिरूहयोरलब्धपाकयोरित्यन्वयः, इति पाठो भवेत्।

वमनानर्हाः ।—

न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीड़ितान् ।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोऽर्दिताक्षेपकपीडिताश्च ॥ १९ ॥

रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्द्ध्वं रुधिरे च तीव्रे ।
दुष्टे च कोष्ठे क्रिमिभिर्मनुष्यं न वामयेद्वचसि चातिवृद्धे ॥ २० ॥

वमननिषेधस्य अपवादविधिः ।—

एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ।
अत्युल्वणकफा ये च ते च स्युर्मधुकाम्बुना ॥ २१ ॥
तैमिरिकादयोऽपि एतादृश्यामवस्थायां वाम्या इति ज्ञेयम् ।

अवस्थाविशेषे गुल्मिनो वमनादेशः ।—

मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ।
सोत्क्लेशश्चारुचिर्यस्य स गुल्मो वमनोपगः ॥ २२ ॥

अन्यच्च ।—

वमनविरेचनार्हकालः ।—

शरत्काले वसन्ते च प्रावृट्काले च देहिनाम् ।
वमनं रेचनञ्चैव कारयेत् कुशलो भिषक् ॥ २३ ॥

वमनार्हाः ।—

बलवन्तं कफव्याप्तं हृल्लासादिनिपीड़ितम् ।

अवाम्यं निर्दिशति, नेति ।—तैमिरिकं तिमिराख्यनेत्ररोगवन्तम् । तरुणे गर्भे अचिरजाते गर्भे । गच्छत्यथोर्द्ध्वं रुधिरे च तीव्रे ऊर्द्ध्वगरक्तपित्ते । दुष्टे च कोष्ठे इत्यस्य क्रिमिभिरित्यनेन सम्बन्धः ॥ १९।२० ॥

निषेधस्यापवादमाह, एतेऽपीति ।—मधुकाम्बुना यष्टिमधुकक्वाथेनेत्यर्थः ॥ २१ ॥

निषिद्धवमनस्यापि गुल्मिनः अवस्थाविशेषे वमनार्हत्वमाह, मन्दोऽग्निरिति ।—गुल्मी मन्दाग्नीत्यादिलक्षणविशिष्टश्चेत् वमनार्हः ॥ २२ ॥

शोधनार्हकालं निर्दिशति, शरदिति ।—अत्र शरत्कालादि शब्देन तत्समीपवर्त्ति साधारणकालो बोद्धव्यः, यदुक्तं "श्रावणे कार्त्तिके चैत्रे मासि साधारणे क्रमात् । ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ॥" इति । दूषणञ्चैव इत्यत्र च-कारेण बस्त्यादेरपि ग्राह्यत्वम् ॥ २३ ॥

तथा वमनमात्राञ्च धीरचित्तञ्च वामयेत् ॥ २४ ॥
विषदोषे स्तन्यरोगे मन्देऽग्नौ श्लीपदेऽर्वुदे ।
विसर्पे कुष्ठहृद्रोग मेहाजीर्णभ्रमेषु च ॥ २५ ॥
विदारिकाऽपची-कास श्वास-पीनसवृद्धिषु ।
अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु ॥ २६ ॥
नासाताल्वोष्ठपाकेषु कर्णस्रावेऽधिजिह्वके ।
गलशुण्ड्यतीसारे च पित्तश्लेष्मगदे तथा ॥
मेदोगदेऽरुचौ चैव वमनं कारयेद्भिषक् ॥ २७ ॥

वमनानर्हाः ।—

न वामनीयस्तिमिरी न गुल्मी नोदरी कृशः ।
नातिवृद्धा गर्भिणी च न स्थूलो न क्षतातुरः ॥ २८ ॥
मदार्त्तो बालको रूक्षः क्षुधितश्च निरूहितः ।
उदावर्त्त्यूर्ध्वरक्ती च दुश्छर्द्यः केवलानिली ॥
पाण्डुरोगी क्रिमिव्याप्तः पठनात् स्वरघातकः ॥ २९ ॥

अवाम्यानामवस्थाविशेषे वाम्यत्वनिर्देशः ।—

एतेऽप्यजीर्णव्यथिता वाम्या ये विषपीड़िताः ।
कफव्याप्ताश्च ते वाम्या मधुकक्वाथस्य पानतः ॥ ३० ॥

ग्रन्थान्तरस्थान्यां * रसमालामाह—

वमनार्हं निर्दिशति, बलवन्तमिति ।—विदारिका क्षुद्ररोगोक्ता ॥ २४—२७ ॥

अवाम्य निर्दिशति, नेत्यादि ।—दुश्छर्द्यः, दुःखेन वामनीयः, यस्य वमनं क्लेशेन भवति, स इत्यर्थः । केवलानिली दोषान्तरासंश्लिष्टवातरोगवान् । पठनात् स्वरघातकः अत्युच्चैरध्ययनात् स्वरभेदरोगवान् ॥ २८ २९ ॥

अवस्थाविशेषे अवाम्यानां वाम्यत्वं तथा वमनयोगश्चाह, एतेऽपीत्यादि ।—मधुकक्वाथस्य मधुककाथस्येत्यर्थः । "मधुकक्वाथस्य पानतः" इत्यत्र "मधुककाथपानतः" इति पाठः समीचीनः ॥ ३० ॥

---

* रसमालानिन्यत्र रसशब्देन साधी बोध्यः, द्रवत्वसाधर्म्यात् ।

मतान्तरे क्वाथस्योत्तमादिमात्रानिर्देशः ।—

क्वाथपाने नवप्रस्था ज्येष्ठा मात्रा प्रकीर्त्तिता ।
मध्यमा षण्मिता प्रोक्ता त्रिप्रस्था च कनीयसी ॥ ३१ ॥

प्रसङ्गादन्यौषधानाञ्च मात्रामाह—

कल्कादीनामुत्तमादिमात्रानिर्देशः ।—

कल्कचूर्णावलेहानां त्रिपलं श्रेष्ठमात्रया ।
मध्यमं द्विपलं दद्यात् कनीयस्कं पलं भवेत् ॥ ३२ ॥

वमने वैगिकान्तिकीशुद्धौ उत्तमादिवेगनिर्देशः ।—

वमने चापि वेगाः स्युरष्टौ पित्तान्ता उत्तमाः ।
षड्वेगा मध्यमा वेगाश्चत्वारोऽप्यवरा मताः ॥ ३३ ॥

दोषविशेषे द्रव्यविशेषनिर्देशः ।—

कफं कटुकतीक्ष्णोष्णैः पित्तं स्वादुहिमैर्जयेत् ।
सुस्वादुलवणाम्लोष्णैः संसृष्टं वायुना कफम् ॥ ३४ ॥

[ इति वमनम् ] ।

अथ विरेचनमाह शार्ङ्गधरः,—

---

पानीयक्वाथस्य मात्रा ग्रन्थान्तरोक्तामाह, क्वाथपाने इत्यादि ।—षण्मिता षट्-प्रस्था इत्यर्थः ॥ ३१ ॥

वामककल्कादीनां मात्रामाह, कल्केति ।—मध्यमं तथा कनीयस्कमित्यत्र मानमिति शेषः ॥३२॥

वमनवेगस्य श्रेष्ठत्वादिकमाह, वमने इति ।—वमने वमनविषये पित्तान्ताः अष्टौ वेगा उत्तमा मताः, कफाशयाधः पित्ताशयावस्थानात् आदौ कफनिःसरणानन्तरं यदा पित्तं निःसर्तुमारभेत, तथा अष्टौ वारान् वमनानि भवेयुः, तदा उत्तम-वेगोऽवगन्तव्यः, एवं षट्चतुर्वेगाभ्यां मध्यमावरवेगाववगन्तव्यौ । एतेन वमने वैगिकी आन्तिकी च शुद्धिर्दर्शिता इति । अत्राष्टौ वेगा इति प्रथमवेगपरित्यागेन गणनीयाः, वक्ष्यति—"वमने तु पीतम्" इति ॥ ३३ ॥

दोषभेदात् रसवीर्य्यनिर्देशमुखेन वमनकारकद्रव्यविशेषमाह, कफमिति । "सुस्वादुलवणोष्णैश्च" इति पाठान्तरं न समीचीनम् । संसृष्टं वायुना कफमित्यनेन केवलवायौ वमनं निषिद्धमिति प्रदर्शितम् ॥ ३४ ॥

विरेचनविधिः ।—

स्निग्धस्विन्नस्य वान्तस्य दद्यात् सम्यक् विरेचनम् ॥ ३५ ॥

अस्य गुणमाह सुश्रुतः,—

सम्यग्योगयुक्तस्य विरेचनस्य गुणाः ।—

बुद्धेः प्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं ज्वलनातिदीप्तिम् ।
चिराच्च पाकं वपुषः करोति विरेचनं सम्यगुपास्यमानम् ॥ ३६ ॥

अवान्तस्य विरेचने दोषनिर्देशः ।—

अवान्तस्य त्वधःस्रस्तो ग्रहणीं छादयेत् कफः ।
मन्दाग्निं गौरवं कुर्य्याज्जनयेद्वा प्रवाहिकाम् ॥ ३७ ॥

ग्रहणी अग्निवहा धमनी, तात्स्थ्यादग्निमाहुः, तां छादयेत् ।

अवान्तस्य विरेचने दोषपरिहारोपायः ।—

अथवा पाचनैरामं बलासञ्च विपाचयेत् ॥ ३८ ॥

वैरेचनिककालनिर्देशः ।—

स्निग्धस्य स्नेहनैः कार्य्यं स्वेदैः स्विन्नस्य रेचनम् ।
शरद्दतौ वसन्ते च देहशुद्धौ विशेषतः ॥ ३९ ॥

विरेकनिषेधमाह—

विरेचनविधिमाह, स्निग्धेति ।—स्नेहस्वेदवमनानन्तरं विरेचनं दातव्यं, न तु प्रागेव अस्निग्धायाय ॥ ३५ ॥

सम्यक् विरेचनस्य गुणमाह, बुद्धेरिति ।—"ज्वलनातिदीप्तिम्" इत्यत्र "बलमग्निदीप्तिं" तथा "वपुषः" इत्यत्र "वयसः" इति पाठः सुश्रुतसम्मतः । चिराच्च पाकं वपुषः देहस्य जीर्णत्वादिरूपं परिणामं, जरापलितादिकमिति यावत् । सम्यगुपास्यमानं न त्वयोगातियोगमिथ्यायोगैरुपास्यमानमित्यर्थः ॥ ३६ ॥

प्रागवान्तस्य विरेचने दोषमाह, अवान्तस्येति ।—ग्रहणीम् आधारभूतग्रहण्याश्रितमग्निमित्यर्थः, यदुक्तं चरके—"ग्रहण्या बलमग्निर्हि स चापि ग्रहणीं श्रितः" इति । विरेचनयोगेनादौ पित्तं पश्चात् कफो निःसरति, वमनेन तं कफमनिःसार्य्यैव विरेचने दत्ते प्रभूततयाऽवस्थितः आमाशयस्थः सः कफः अधः स्रुतः अग्निमावृत्य मन्दाग्न्यादिकं जनयेदिति निष्कर्षः ॥ ३७ ॥

अकृतवमनस्य विध्यन्तरमाह, अथवेति ।—बलासं कफम् ॥ ३८ ॥

विरेचनानर्हाः ।—

बालवृद्धावतिस्निग्धः क्षतक्षीणो भयार्दितः ।
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ॥ ४० ॥
नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ।
शल्यार्दितश्च रूक्षश्च न विरेच्यो भिषग्वरैः ॥ ४१ ॥

विरेच्यमाह—

विरेचनार्हाः ।—

जीर्णज्वरी गरव्याप्तो वातरक्ती भगन्दरी ।
अर्शः-पाण्डूदरग्रन्थि-हृद्रोगारुचिपीडिताः ॥ ४२ ॥
योनिरोगप्रमेहार्त्त-गुल्मप्लीहव्रणार्दिताः ।
विद्रधिच्छर्दिविस्फोट-विसूचीकुष्ठसंयुताः ॥ ४३ ॥
कर्णनासाशिरोवक्त्र-गुदमेढ्रामयार्दिताः ।
प्लीहशोथाक्षिरोगार्त्ताः क्रिमिरोगानिलार्दिताः ॥
शूलिनो मूत्रघातार्त्ता विरेकार्हा नरा मताः ॥ ४४ ॥

दोषभेदेन मृद्वादिकोष्ठनिर्देशः ।—

बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः ।
बहुवातः क्रूरकोष्ठो दुर्विरेच्यः स कथ्यते ॥ ४५ ॥

तस्य मात्रामाह—

विरेचने वैगिक्यान्तिकीशुद्धौ उत्तमादिवेगनिर्देशः ।—

मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तगा ।

विरेचनोपयोगिकालमाह, स्निग्धस्येति ।—"वसन्ते च" इत्यत्र च-कारात् प्रावृट्कालेऽपि ग्रहणं कार्य्यमिति ॥ ३९—४१ ॥

विरेच्यानाह, जीर्णज्वरीति ।—गरव्याप्तः विषार्त्तः ॥ ४२—४४ ॥

दोषभेदेन मृद्वादिकोष्ठतामाह, बह्विति ।—मृदुः इत्यत्र कोष्ठ इति शेषः ; एवं मध्यम इत्यत्रापि । क्रूरः बहुवातः ॥ ४५ ॥

विरेचनस्य आन्तिकीं वैगिकीञ्च शुद्धिं वक्तुम् उत्तमादिवेगमाह, मात्रोत्तमेति ।—त्रिंशद्वेगैः त्रिंशद्वारान् विरेचने सञ्जाते इत्यर्थः । कफान्तगा सा च वेगमात्रा कफोऽन्ते

वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगकैः॥ ४६॥

वैरेचनिककषायाणां श्रेष्ठादिमात्रानिर्देशः।—

द्विपलं श्रेष्ठमाख्यातं मध्यमञ्च पलं भवेत्।
पलार्द्धञ्च कषायाणां कनीयस्कं विरेचनम्॥ ४७॥

आनन्दसेनस्त्वाह—

मतान्तरे दोषभेदेन मृद्वादिकोष्ठनिर्देशः।—

पित्तेन स्यान्मृदुः कोष्ठः क्रूरो वातकफाश्रयात्।
मध्यमः समदोषः स्यात् मात्रा योज्याऽनुरूपतः॥ ४८॥

मतान्तरे उत्तमादिमात्रानिर्देशः।—

पलन्तु श्रेष्ठमाख्यातं मध्यन्त्वर्द्धपलं भवेत्।
कर्ष-मानं कनीयः स्यात् ज्ञेयं श्रेष्ठाद्यपेक्षया॥ ४९॥

वमनविरेकयोश्चतुर्द्धा विशुद्धिमाह—

गच्छति यस्याः तादृशी, पित्तनिःसरणानन्तरं यदा कफः निःसर्त्तुमारभेत, तदा उत्तमवेगमात्रया विरेचनं जातमित्यवगन्तव्यमित्यर्थः। एव विंश-दशवेगाभ्यां मध्यहीन-वेगौ बोद्धव्यौ। अत्र प्रथमद्वित्रिवेगं परित्यज्य वेगगणना कार्य्या, "द्वित्रान् सविट्कान्" इत्याद्युक्तेरिति। एतेन विरेचनस्य वैगिकी चान्तिकी च शुद्धिः प्रदर्शितेति॥ ४६॥

विरेचने कषायाणां श्रेष्ठादिमात्रामाह, द्विपलमिति।—कषायाणां वैरेचनिक-कषायाणाम्॥ ४७॥

पित्तेनेति।—क्रूरो वातकफाश्रयात् कफस्य स्थिरमन्दादिगुणेन सुष्ठु मला-निःसरणात् कफेऽपि क्रूरकोष्ठत्वमवधातव्यम्। यत्तु "बहुश्लेष्मा च मध्यमः" इत्यनेन कफबाहुल्ये मध्यकोष्ठता उक्ता, तत्तु तस्य स्निग्धत्वादिगुणेन कदाचित् मलनिःसरणा-दवगन्तव्या। स्मृतिद्वैधवदुभयमपि मतं प्रमाणम्। यद्वा—संसर्गसन्निपातजे कोष्ठे कफस्य योगवाहित्वात् वातकफे क्रूरकोष्ठत्वमवगन्तव्य, यदाह खरनादः,—"वातोल्बणा स्यात् ग्रहणी क्रूरकोष्ठस्य देहिनः। पित्तला मृदुकोष्ठस्य योगवाही तयोः कफः॥" इति। सुश्रुतेनाप्युक्तं—"बहुवातश्लेष्मा क्रूरः" इति। समदोषः प्रकृतिस्थवातादिकः पुरुषः॥ ४८॥

वैरेचनिककषायाणां श्रेष्ठादिमाने मतान्तरमाह, पलमित्यादि।—श्रेष्ठाद्यपेक्षया श्रेष्ठबलानलाद्यपेक्षया। "कोष्ठाद्यपेक्षया" इति पाठान्तरम्। यत्तु द्विपलमित्यादिना मात्राद्वैरूप्यं प्राक् प्रदर्शितं तत्तु मृदुद्रव्यसाधितविरेचनयोगापेक्षया मन्तव्यम् इति॥४९॥

शोधनचतुष्टयस्य नामनिर्देशः।—

वैगिकी मानिकी चापि आन्तिकी लैङ्गिकी तथा।
चतुर्विधा शुद्धिरुक्ता वमने च विरेचने॥ ५०॥

वमनविरेकयोर्वैगिकीशुद्धौ जघन्यादिवेगस्य तथा विरेके मानिकीशुद्धौ जघन्यादिमानस्य निर्देशः।—

जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ।
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च॥५१॥

जघन्येति।—जघन्ये वमने चत्वारो वेगाः, मध्यमे षड्वेगाः, प्रवरेऽष्टवेगाः। तथा च जघन्यविरेके दश वेगाः, मध्यमे विरेके दशद्विगुणा विंशतिवेगा इत्यर्थः, प्रवरे श्रेष्ठे विरेके दशत्रिगुणा त्रिंशद्वेगा इत्यर्थः। विरेके दोष-मानेनापि जघन्यादित्वमाह, प्रस्थ इत्यादि।—द्विगुणः प्रस्थो जघन्ये, त्रिगुणो मध्यमे, चतुर्गुणः प्रवरे इत्यर्थः।

---

वमनविरेचनयोश्चतुष्प्रकारत्वमाह, वैगिकीति।—वैगिकी वेगैः हीनमध्योत्तमैः चतुः-षडष्टभिर्वमनवेगैः तथा दशभिर्विंशैस्त्रिंशैश्च विरेचनवेगैः ज्ञायते इति तादृशी। मानिकी मानेन वान्तद्रव्यस्य हीनमध्योत्तमेन प्रस्थ-सार्द्धप्रस्थ-प्रस्थद्वयमानेन तथा विरिक्तमलस्य द्वि-त्रि-चतुःप्रस्थमानेन ज्ञायते इति तादृशी। आन्तिकी अन्तेन वमने पित्तान्तेन विरेचने कफान्तेन च ज्ञायते इति तादृशी। लैङ्गिकी लिङ्गैर्वान्तविरिक्तसम्यक्-लक्षणैर्ज्ञायते इति तादृशी॥ ५०॥

वेगानुसारेण वमनरेचनयोः मानानुसारेण च विरेचनस्य हीनमध्यप्रवरत्वमाह, जघन्येति।—वारचतुष्टयवमनेन हीनवान्तत्वं षड्वारवमनेन मध्यवान्तत्वम् अष्टवारवमनेन प्रवरवान्तत्वमवगन्तव्यमिति। विरेके तु दशैव ते द्वित्रिगुणाः दशविंशत्रिंशद्वारैः विरेचने, जघन्यादित्वं क्रमात् ज्ञातव्यमिति। यद्यपि वेगानुसारतो विरेचनस्य उत्तमत्वादिकं प्रागेवोक्तं तथाऽप्यत्र वमनविषयकप्रसङ्गे तस्य पुनरुक्तिः सम्पूर्णश्लोकानुरोधात न दोषाय इति। जघन्यादिभेदेन वमनरेचनयोर्वैगिकीं शुद्धिमभिधाय सम्प्रति केवलविरेचनस्य जघन्यादिदोषमानभेदेन मानिकीं शुद्धिमाह, प्रस्थस्तथा द्वित्रिचतुर्गुणश्चेति—दशविंशत्रिंशद्वेगैः निसृतमलस्य समुदायस्य मानञ्चेत् द्विप्रस्थं त्रिप्रस्थं चतुःप्रस्थञ्च स्यात् तदा क्रमशः जघन्यादि-विरेचनं जातमिति भिषग्भिरवधातव्यम्। श्लोकस्यास्य प्रथमपादत्रयेण वमनरेचनयोः वैगिकी तथा अन्त्यपादेन विरेचनस्य मानिकी शुद्धिर्दर्शिता इति बोद्धव्यम्॥ ५१॥

वमनादौ प्रस्थमानस्य विशेषनिर्देशः ।—

वमने च विरेके च तथा शोणितमोक्षणे ।

सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥ ५२ ॥

वमनविरेकयोरान्तिकीशुद्धेर्वमनस्य च मानिकीशुद्धेर्निर्देशः ।—

पित्तान्तमिष्टं वमनं विरेकादर्द्धं कफान्तञ्च विरेकमाहुः ।

वमनविरेकयोर्वेगसङ्ख्याया विशेषनिर्देशः ।—

द्वित्रान् सविट्कानपनीय वेगान् मेयं विरेके वमने तु पीतम् ॥ ५३॥

* पित्तान्तमिति ।—आन्तिकी शुद्धिः । विरेकादर्द्धमिति—विरेके यत् प्रस्थादिना जघन्यादित्वमुक्तं तदर्द्धपरिमाणेन जघन्यादित्वं वमने ज्ञेयम् । कफान्तमिति ।—कफान्तमित्यनेन विरेचने आन्तिकी शुद्धिरुक्ता । विरेके द्वित्रान् सविट्कान् वेगान् अपनीय त्यक्त्वा मेयं गणनीयं

पूर्वश्लोके "प्रस्थस्तथा" इत्युक्तम्, इदानीं तं प्रस्थमेव विवृणोति, वमने इति ।—प्रस्थशब्देन षोडशपलमुच्यते, परन्तु वमनादिषु त्रिषु प्रस्थशब्दोऽयं सार्द्धत्रयोदशपलरूपतया गणनीयः, न तु षोडशपलरूपतया इति ॥ ५२ ॥

वमनविरेचनयोरान्तिकीं तथा वमनस्य मानिकीं शुद्धिं दर्शयति, पित्तान्तमिति ।—पीतवमनभेषजस्य यदा पित्तं निःसर्त्तुमारभेत, तदाऽवगन्तव्यम् आमाशयस्थः दुष्टः कफः कार्त्स्न्येनैव निःसृतवान्, अतः सम्यग्वमनं भूतम् ; एवं विरेचनेऽपि कफान्तम् इति पदस्य व्याख्याऽवगन्तव्या इति । "पित्तान्तमिष्टं वमनं कफान्तञ्च विरेचनम्" इति पाठस्तु असम्पूर्ण एव, चक्रसङ्ग्रहादौ भिन्नविधपाठदर्शनात "विरेकादर्द्धम्" इति ग्रन्थकर्त्तुः स्वकृतव्याख्याया अप्रासाङ्गिकत्वाच्च इति मन्तव्यम् । जघन्यमध्येत्यादिना वमनविरेचनयोर्वेगानुसारेण उत्तमादिमात्रा निर्दिष्टा, तत्र विशेषमाह, द्वित्रानिति ।—द्वित्रानिति अनैकान्तिकवचनेन मलभागस्यामेयता दर्शिता ॥ ५३ ॥

* पित्तान्तमिति ।—आन्तिकी शुद्धिः वमने पित्तान्तेन विरेचने च कफान्तेन या ज्ञायते तादृशी । "विरेकादर्द्धम्" इत्यत्र "विरेकार्द्धभेषजमात्रया कार्य्या" इति व्याख्या तु असङ्गता, लेखकप्रमादादेषाऽसङ्गतिरिति मन्ये । उक्तिरियं निःसृतदोषस्य परिमाणज्ञापिका, न तु औषधस्य परिमाणज्ञापिका, तथा च चक्रटीकायां शिवदासः,—"विरेकादर्द्धमित्यनेन वमनस्य दोषप्रमाणोपलक्षिता मानिकी शुद्धिरुक्ता, जघन्यमध्यप्रवरे विरेके प्रस्थस्तथेत्यादिना यद्दोषमानमुक्तं तदपेक्ष्य वमने अर्द्धमित्यर्थः" इति ।

परिस्रावं कार्य्यं, विरेकसङ्ख्या कर्त्तव्येत्यर्थः। तथा वमने पीतम् औषधमपनीय मानं कर्त्तव्यं, वेगानामित्यर्थः। विरेके पूर्व्वदिनाहार-मलविरेकात् प्रथमतः वेगद्वयं त्रयं वा परिहृत्य सङ्ख्या कर्त्तव्या इति। वमनेऽपि पीतमौषधं प्रथमवेगेन वहिर्निःसरति, अतस्तन्न गणनीयमतोऽनन्तरं सङ्ख्या कार्य्येति दिक्।

वमनस्य सम्यग्योगलक्षणेनान्तिकीलैङ्गिकीशुद्धिनिर्देशः।—

क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तनोर्लघुत्वेऽपि च लक्ष्यमाणे॥५४॥

विरेकस्य सम्यग्योगलक्षणेन लैङ्गिक्यान्तिकीशुद्धिनिर्देशः।—

स्रोतोविशुद्धीन्द्रियसम्प्रसादौ लघुत्वमूर्ज्जोऽग्निरनामयत्वम्।
प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत् क्रमेण॥५५॥

प्राप्तिरिति प्रवृत्तिरित्यर्थः।

विरेचनायोगस्य लक्षणम्।—

स्यात् श्लेष्मपित्तानिलसम्प्रकोपः सादस्तथाऽग्नेर्गुरुता प्रतिश्या।
तन्द्रा तथा च्छर्दिररोचकश्च वातानुलोम्यं न च दुर्व्विरिक्ते॥५६॥

विरेचनातियोगस्य लक्षणम्।—

कफास्रपित्तक्षयजानिलोत्थाः सुप्त्यङ्गमर्द्दक्लमवेपनाद्याः।

---

क्रमात् कफ इति।—व्याख्यातोऽयं प्राक्॥ ५४ ॥

विरेकस्य सम्यग्योगलक्षणमाह, स्रोत इत्यादि।—स्रोतोविशुद्धिः शिरा-धमन्यादिच्छिद्राणां स्फुटीभावः। लघुत्वमित्यत्र देहस्य मलाशयस्य चेति शेषः। ऊर्ज्जोऽग्निः प्रबलाग्निः। क्रमेण विट्पित्तकफानिलानां प्राप्तिः आदौ मल ततः पित्तं ततः कफः ततोऽनिलो निःसरति चेत् स सम्यग्विरिक्तो मन्तव्यः। अवान्ते वायुनिःसरण विट्पित्तादिनिःसरणेन रिक्तकोष्ठतया ज्ञातव्यमिति। प्रदर्शितक्रमलङ्घनेन विडादिप्रवृत्तौ तु न सम्यग्योगलक्षणं भवतीति ज्ञातव्यम्। किञ्चात्र पूर्व्वार्द्धेन विरेचनस्य लैङ्गिकी तथा परार्द्धेनान्तिकी शुद्धिरिति ज्ञेयम्॥ ५५ ॥

निद्राबलाभावतमःप्रवेशाः सोन्मादहिक्काश्च विरेचितेऽति ॥५७॥

विरेकनिषेधमाह—

विरेचनानर्हाः ।—

क्षीणः क्षतोरःक्षतबालवृद्धा दीनोऽथ शोषी भयशोकतप्तः ।
श्रान्तस्तृषार्तोऽपरिजीर्णभक्तो गर्भिण्यधो गच्छति यस्य चासृक् ॥५८॥
नवप्रतिश्यायपरीतदेहो नवज्वरो या च नवप्रसूता ।
कषायनिष्ठा न विरेचनीयाः स्नेहादिभिर्ये त्वनुपस्कृताश्च ॥५९॥

अविरेच्यानामवस्थाविशेषे विरेच्यत्वनिर्देशः ।—

अत्ययापत्तिपरीतदेहान् विरेचयेत्तानपि मन्दमन्दम् ।
विरेचनैर्यान्ति नरा विनाशमज्ञप्रयुक्तैरविरेचनीयाः ॥६०॥

[ इति विरेचनम् ] ।

अथ नस्यमाह—

नस्यस्य द्वैविध्यं कार्यञ्च ।—

नस्यभेदो द्विधा प्रोक्तो रेचनं स्नेहनं तथा ।
रेचनं कर्षणं प्रोक्तं स्नेहनं बृंहणं मतम् ॥ ६१ ॥

रेचनं कफादीनामित्यर्थः ।

नस्यस्य निरुक्तिः पर्य्यायश्च ।—

नस्यं तत् कथ्यते धीरैर्नासाग्राह्यं यदौषधम् ।
नावनं नस्यकर्मेति तस्य नामद्वयं मतम् ॥ ६२ ॥

हीनातियोगयुक्तयोर्विरिक्तयोर्लक्षणमाह, अस्तीति ।—गुरुता शरीरस्य कोष्ठस्य च गुरुत्वम् ॥ ५६।५७ ॥

अविरेच्यानाह, क्षीण इति ।—क्षतोरःक्षत क्षतरोगी उरःक्षतो च । शोषी यक्ष्मी । अधो गच्छति यस्य चासृक् अधोगरक्तपित्ती । कषायनिष्ठाः कषाय-रससेवनशीलाः । अनुपस्कृताः असंस्कृताः । तान् क्षीणादीन् । मन्द-मन्दं मृदु यथा तथा ॥ ५८—६० ॥

पञ्चकर्मसु वमनविरेचने उक्त्वा इदानीं नस्यमाह, नस्यभेद इति ।—रेचनं शिरोविरेचनम् ॥ ६१ ॥

नस्यस्य निरुक्तिपर्यायावाह—नस्यमिति ॥ ६२ ॥

दोषविशेषे नस्यदानकालनिर्देशः।—

कफपित्तानिलध्वंसे पूर्वं मध्येऽपराह्णके।
दिनस्य गृह्णीत नस्यं रात्रावप्युत्कटे गदे ॥ ६३ ॥

अन्यच्च।—

नस्यस्य अवान्तरभेदनिर्देशः।—

प्रतिमर्शोऽवपीडश्च नस्यं प्रधमनं तथा।
शिरोविरेचनञ्चैव नस्तः-कर्म तु पञ्चधा ॥ ६४ ॥

प्रतिमर्शलक्षणम्।—

ईषदुच्छिङ्घनात् स्नेहो यावान् वक्त्रं प्रपद्यते।
नस्तो निषिक्तस्तं विद्यात् प्रतिमर्शं प्रमाणतः ॥ ६५ ॥

प्रतिमर्शप्रयोजनम्।—

प्रतिमर्शश्च नस्यार्थं करोति न च दोषवान् ॥ ६६ ॥

अवपीडस्य द्वैविध्यं निरुक्तिश्च।—

शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः।

नस्यदानस्य समयमाह, कफेति।—दिनस्य पूर्वे पूर्वाह्णे कफध्वंसार्थं, मध्याह्ने पित्तध्वंसार्थं अपराह्णे च वातनाशार्थं नस्यं दातव्यम्। आत्ययिके व्याधौ रात्रावपि नस्यं देयमिति ॥ ६३ ॥

रेचनस्नेहनभेदेन द्विविधस्य नस्यस्य अवान्तरभेदमाह, प्रतिमर्श इति।—शिरोविरेचनमिति—यद्यपि अवपीडादिभिरपि शिरोविरेचनं भवति, तथाऽपि यत् प्राधान्येन शिरोविरेचनार्थमेव दीयते तदेव शिरोविरेचनं मन्तव्यम् ॥ ६४ ॥

नस्यभेदप्रतिमर्शस्य मात्रामाह, ईषदिति।—ईषदुच्छिङ्घनात् किञ्चिदाकर्षणात्, नस्तो निषिक्तः नासया प्रदत्तः, यावान् स्नेहः वक्त्रं मुखं, प्रपद्यते प्राप्नोति, प्रमाणतः मात्रामाश्रित्य, तं नस्यं प्रतिमर्शं विद्यात्। इदन्तु स्नैहिकं नस्यम् ॥ ६५ ॥

प्रतिमर्शस्य प्रयोजनमाह, प्रतिमर्शश्चेति।—"स्नेहनं शोधनञ्चैव द्विविधं नस्यमुच्यते" इति चरकवचनात् नस्यार्थं नस्यस्य स्नेहनशोधनरूपप्रयोजनसाधनार्थम्। न च दोषवान् न च व्यापत्तिकृत ॥ ६६ ॥

अवपीडमाह, शोधन इति।—शोधनः दोषसंशोधनः। स्तम्भनः रक्तपित्तादौ

आपीड्य दीयते यस्मादवपीड़स्ततः स्मृतः ॥ ६७ ॥

नस्यभेदस्नेहनस्य प्रयोगविषयः ।—

स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा ।
बलार्थं दीयते स्नेहो नस्तः-शब्दोऽत्र वर्त्तते ॥ ६८ ॥

अन्यच्च ।—

मतान्तरे नस्यभेदनिर्देशः ।—

अवपीड़ः प्रधमनं द्वौ भेदावपरौ स्मृतौ ।
शिरोविरेचनस्यार्थे तौ तु देयौ यथायथम् ॥६९॥

मतान्तरे अवपीड़लक्षणम् ।—

कल्कीकृतादौषधात् यः पीड़ितो निःसृतो रसः ।
सोऽवपीड़ः समुद्दिष्टः तीक्ष्णद्रव्यसमुद्भवः ॥ ७० ॥

विधिमुखेन प्रधमनस्य लक्षणनिर्देशः ।—

षड़ङ्गुला द्विवक्त्रा या नाड़ी चूर्णं तया धमेत् ।
तीक्ष्णं कोलमितं वक्त्र-वातैः प्रधमनं स्मृतम् ॥ ७१ ॥

रक्तस्तम्भन इत्यर्थः । अवपीड़स्य व्युत्पत्तिमाह, आपीड्येति ।—आपीड्य सम्यक् पीड़यित्वा । "आपीड्य" इत्यत्र "वपीड्य" इति चक्रोक्तपाठः ॥ ६७ ॥

नस्यनामकं नस्यमाह, स्नेहार्थमिति ।—शून्यशिरसां स्नेहार्थं ग्रीवादीनां बलार्थञ्च यः स्नेहो दीयते नस्यार्थं स्नेहननस्यं दीयते । अत्र नस्तः-शब्दो वर्त्तते नस्तः-शब्दो नस्यपर्य्यायक इत्यर्थः ॥ ६८ ॥

मतान्तरमाह, अवपीड़ इति ।—शिरोविरेचनस्यार्थे शिरसो कफादिदोष-संशोधनार्थमित्यर्थः । तौ अवपीड़प्रधमने । यथायथं यथाव्याधि विविच्येत्यर्थः ॥६९॥

अवपीड़स्वरूपमाह, कल्कीकृतादिति ।—कल्कीकृतात् दृषदि पेषितात्, औषधात् तीक्ष्णवीर्य्यौषधात् । "निःसृतः" इत्यत्र "निष्युतः" इति पाठान्तरम् । तीक्ष्णद्रव्यसमुद्भवः आर्द्रकादितीक्ष्णद्रव्यसाधित इत्यर्थः ॥७०॥

प्रधमनमाह, षड़ङ्गुलेति ।—षड़ङ्गुला षड़ङ्गुलदीर्घा, द्विवक्त्रा उभयतश्छिद्र-विशिष्टा । धमेत् फुत्कारं दद्यादित्यर्थः, वक्त्रवातैरित्यनेनान्वयः । तीक्ष्णं कोलमित-मिति चूर्णमित्यस्य विशेषणम् । कोलप्रमाणं तीक्ष्णद्रव्यकृतं चूर्णम् उभयत-श्छिद्रविशिष्टायां नलिकायां निधाय नासापुटे संस्थाप्य मुखेन फुत्कारं कुर्य्यादिति ॥ ७१ ॥

वैरेचननस्यस्य विषयनिर्देशः।—

ऊर्द्धजत्रुगते रोगे कफजे च स्वरक्षये।
अरोचके प्रतिश्याये शिरःशूले च पीनसे॥
शोथापस्मारकुष्ठेषु नस्यं वैरेचनं हितम्॥ ७२॥

स्नैहिकनस्यस्य विषयः।—

भीरुस्त्रीकृशबालानां नस्यं स्नेहेन शस्यते॥ ७३॥

अवपीडनस्यस्य विषयः।—

गलरोगे सन्निपाते निद्रायां सविषे ज्वरे।
मनोविकारे क्रिमिषु युज्यते चावपीड़नम्॥ ७४॥

प्रधमननस्यस्य विषयः।—

अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते।
चूर्णं प्रधमनं धीरैस्तद्धि तीक्ष्णतरं यतः॥ ७५॥

नस्यभेदस्नैहिकनस्यस्य मात्रानिर्देशः।—

नस्यस्य स्नैहिकस्यात्र देयास्त्वष्टौ च विन्दवः।
प्रत्येकशो नस्तकयोर्नृणामिति विनिश्चयः॥ ७६॥

---

शिरोविरेचननस्यस्य विषयमाह, ऊर्द्धजत्रुगते इति।—नस्यं वैरेचनं शिरोविरेचनार्थं नस्यमित्यर्थः॥ ७२।७३॥

अवपीडस्य विषयमाह, गलरोगे इति।—निद्रायां निद्राधिक्ये। सविषे ज्वरे विषजे ज्वरे। "सविषे ज्वरे" इत्यत्र "विषमज्वरे" इति पाठान्तरम्॥ ७४॥

प्रधमनस्य विषयमाह, अत्यन्तेति।—तत् प्रधमनम्॥ ७५॥

नस्याभिधेयस्य स्नैहिकनस्यस्य मात्रामाह, नस्यस्येति।—प्रत्येकशः नस्तकयोः प्रतिनासारन्ध्रे इत्यर्थः, अष्टौ विन्दवः स्नेहमध्ये तर्जनीपर्वयुग्मनिमज्जनेन यावान् स्नेहः च्युतो भवेत्, स विन्दुः, एवमष्टौ विन्दवः शुक्त्यपरपर्य्यायाः एकैकस्मिन् नासाविवरे दातव्या इति। यदुक्तं—"कराङ्गुलीपर्वयुग्मं द्रवमध्ये निमज्जयेत्। स्रवत्तं यावदुत्तिष्ठेत् द्रवं तत विन्दुसंज्ञकम्॥ नस्ये तु विन्दवोऽष्टौ तर्जनीपर्वयुग्मजाः। स्नेहस्य मात्रा सा शुक्तिर्नस्यं मात्रकमुच्यते॥ शुक्तिर्द्वि- परमा शुक्तिः पाणिशुक्तिस्त्रिधा मता। अष्टौ षोडश द्वात्रिंशद्विन्दवः क्रमशश्च ताः॥ द्वात्रिंशद्विन्दवश्चापि शुक्तिरित्यभिधीयते। द्वे शुक्ती परमा शुक्तिः पाणिशुक्तिश्चतु-

नस्यकर्मोपयोगिवयोनिर्देशः ।—

अष्टवर्षस्य बालस्य नस्तःकर्म समाचरेत् ।
अशीतिवर्षादूर्द्ध्वञ्च नावनं नैव दीयते ॥ ७७ ॥

निषेधमाह—

नस्यानर्हाः ।—

तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ।
अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः ॥ ७८ ॥
क्रुद्धः शोकाभितप्तश्च तृषार्त्ती वृद्धबालकौ ।
वेगावरोधी स्नातश्च स्नातुकामश्च वर्जयेत् ॥ ७९ ॥

[ इति नस्यम् ] ।

अथानुवासनमाह—

अनुवासनविधिः ।—

भवेत् सुखोष्णश्च तथा निरेति सहसा सुखम् ।
विरिक्तस्त्वनुवास्यः स्यात् सप्तरात्रात्परं सदा ॥ ८० ॥

अन्यत्र चोक्तम्—

विरेचनात् सप्तरात्रे गते जातबलाय वै ।
कृताहाराय सायाह्ने वस्तिर्देयोऽनुवासनः ॥८१॥

अनुदिनं दीयते इत्यनुवासनः ।

मुधा ॥" इति । चक्रसङ्ग्रहे तु "शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्त्तिताः" इति श्लोकार्द्धमधिकतया दृश्यते। बिन्दुशुक्त्यादीनां स्वरूपनिर्णये बहवो मतभेदा दृश्यन्ते ॥७६॥

नस्योपयोगिवयो निर्देष्टुमाह, अष्टेति।—केषाञ्चिन्मते तु सप्तवर्षादारभ्य नस्यं दातव्यमिति ; यदुक्तं—"न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे" इति ॥ ७७ ॥

नस्यानर्हानाह, तथेति।—"स्नातुकामः" इत्यत्र "शान्तकामः" इति पाठे—शान्तः निवृत्तः, कामः इच्छा, नस्यग्रहणे इति शेषः, यस्य सः शान्तकामः ॥७८।७९॥

अथानुवासनविधिमाह,भवेदिति।—सुखोष्णश्चेत्यत्र वस्तिरिति शेषः,वस्तिः सुखोष्णः कार्य्यः, तथा स्वति सहसा सुखं निरेति। चक्रसङ्ग्रहे तु अस्य—"स तु सैन्धवचूर्णेन शताह्वेन च संयुतः" इति पूर्वार्द्धो दृश्यते। अस्यैव योगस्य सुखनिर्गमनत्वोक्तेः परिभाषाश्लोकस्थाने श्लोकार्द्धस्यास्य सन्निवेशः कस्यापि लेखकस्य प्रमादकृत इति मन्ये ॥८०।८१॥

वस्तिनेत्रस्य उपादाननिर्देशः।—

सुवर्ण-रौप्य-त्रपु-ताम्र-रीति-कांस्यायसास्थिद्रुमवेणुदन्तैः।
नलैर्विषाणैर्मणिभिस्तु तैस्तैः कार्य्याणि नेत्राणि सुकर्णिकानि॥८२॥

वयोभेदेन वस्तिनेत्रस्य परिमाणादिनिर्देशः।—

षड्-द्वादशाष्टाङ्गुलसम्मितानि षड्-विंशति-द्वादशवर्षजानाम्।
स्युर्मुद्ग-कर्कन्धु-सतीनवाहि-च्छिद्राणि वर्त्त्यां पिहितानि चापि॥८३॥
यथावयोऽङ्गुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुडिकामुखानि॥८४॥

कर्णिकाग्रव्यवस्था वस्तिपुटकस्योपकरणानि च।—

स्यात् कर्णिकैकाऽग्रचतुर्थभागे मूलाश्रिते वस्तिनिबन्धने द्वे।

---

वस्तिनेत्रस्य सामग्रीमाह, सुवर्णेति।—त्रपुः वङ्गम्। रीतिः पित्तलम्। आयसं लौहम्। अस्थि हस्त्यादीनाम्, एवं दन्तमपि। विषाणैः महिषादिशृङ्गैः। सुकर्णिकानि वस्तिपुटबन्धनार्थं कर्णद्वययुक्तानीत्यर्थः॥ ८२॥

वयोभेदेन वस्तिनेत्रस्य दैर्घ्यादिकं निर्दिशति, षडित्यादि।—षड्-द्वादशाष्टाङ्गुल-सम्मितानि षड्-विंशति-द्वादशवर्षजानाम् इति यथासङ्ख्यं नेत्रस्य दैर्घ्यमवगन्तव्यम्। एवं मुद्गादिवाहिच्छिद्राणि इत्यत्रापि यथासङ्ख्यत्वमवगन्तव्यम्। कर्कन्धुः क्षुद्रबदरम्। सतीनो वर्त्तुलकलायः। वर्त्त्यां द्रव्यान्तरप्रवेश-वस्तिद्रव्यनिर्गमननिरासार्थं वस्त्रादीनां वर्त्त्यां इत्यर्थः। "वर्त्त्यां" इत्यत्र "वर्त्तैः" इति पाठ—वर्त्तैः वर्त्तिभिः, पाठोऽयं न चरकादिसम्मतः; पिहितानि आच्छादितानि, नेत्राणि इत्यस्य विशेषणम्। यथो-ऽनतिक्रम्येति यथावयः वयोऽनुरूपमित्यर्थः, मूले अनुवास्यस्य स्वाङ्गुष्ठप्रमाणानि अग्रे च स्वकनिष्ठाङ्गुलिपरिमाणानि परिणाहवन्ति विशालताविशिष्टानि, स्थूलानीत्यर्थः। ऋजूनि सरलानि। गोपुच्छसमाकृतीनि क्रमशः सूक्ष्माणि। गुडिकामुखानि गुडिकावत् वर्त्तुलाकारमुखानि॥ ८३।८४॥

सुकर्णिकानि नेत्राणि कार्य्याणि इत्युक्तं, सा कर्णिका कुत्र कार्य्या इत्यपेक्षाया-माह, स्यादिति।—अग्रचतुर्थभागे नेत्रस्य मूलादारभ्य तृतीयभागानन्तरं, षडङ्गुल-दीर्घनेत्रस्य सार्द्धचतुरङ्गुलात् परमित्यर्थः, एका कर्णिका कार्य्या, गुदमध्ये

आरक्षो माहिषो हारिणो वा स्यात् शौकरो वस्तिरजस्य वाऽपि ॥ ८५ ॥

वस्तिपुटकस्य स्वरूपादिकम् ।—

दृढस्तनुर्नष्टशिरो विगन्धः कषायरक्तश्च मृदुः सुशुद्धः ।
नृणां वयो वीक्ष्य यथाऽनुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥ ८६ ॥

व्रणवस्तिनेत्रस्य परिमाणादिनिर्देशः ।—

व्रणवस्तेस्तु नेत्रं स्यात् श्लक्ष्णमष्टाङ्गुलोन्मितम् ।
मुद्गच्छिद्रं गृध्रपक्ष-नलिकापरिणाहि च ॥ ८७ ॥

वस्तिनेत्रस्य धन्वन्तरोक्तम् उपादानम् ।—

नेत्रं कार्य्यं सुवर्णादि धातुभिर्वृक्षवेणुभिः ।
नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते ॥ ८८ ॥

वयोभेदेन धन्वन्तरोक्तनेत्रपरिमाणादिकम् ।—

एकवर्षात्तु षड्वर्षं यावन्मात्रा षडङ्गुलम् ।

---

स्याङ्गुलाधिकस्य प्रवेशनिरोधार्थम् । मूलाश्रिते वस्तिनिबन्धनार्थं द्वे कर्णिके कार्य्ये । आरक्षः हड्डगोभवः । अजस्य छागस्य ॥ ८५ ॥

दृढ इत्यादि ।—तनुः सूक्ष्मः, नष्टशिरः शिराविरहितः, समुद्धृतशिरासमूह इत्यर्थः; कषायेण त्रिफलादिकषायद्रव्यभावनया, रक्तः रञ्जितः, अत एव विगन्धः विगतपूतिगन्धः । सुशुद्धः मलिनताविरहितः । यथाऽनुरूपं वयोऽनुरूपम । नेत्रेषु वस्तिनेत्रेषु. सुबद्धसूत्रः सुदृढबन्धनसूत्रः, वस्तिर्योज्यः । अग्रभागे एककर्णिकायुक्तां कनिष्ठाङ्गुलिपरिमाणस्थूलां मूले च कर्णिकाद्वयवतीम् अङ्गुष्ठमानस्थूलाञ्च वयोऽनुरूपां षडाद्यङ्गुलदीर्घां सुवर्णादिमयीम् ऋज्वादिविशेषणविशिष्टाञ्च नलिकामेकां कुर्यात्, मुद्गादिनिर्गमनार्हं छिद्रञ्च तत्र कार्य्यम् ; दार्ढ्यादिगुणविशिष्टं जरद्गवादीनामन्यतमस्य वस्तिं नलिकायास्तस्याः मूलकर्णिकयोर्दृढसूत्रेण बध्नीयात् इति निष्कर्षः ॥ ८६ ॥

शोधनवस्तिमुक्त्वा नाडीव्रणे दीयमानं वस्तिं विवृणोति, व्रणवस्तेरिति ।—व्रणे व्रणरोगे, नाडीव्रणे जाते दीयमानो वस्तिः व्रणवस्तिः । मुद्गच्छिद्रं मुद्गप्रवेशार्हच्छिद्र-विशिष्टम् । "मृदुच्छिद्रम्" इति पाठे—स्वल्पच्छिद्रमित्यर्थः । गृध्रपक्षनलिकापरिणाहि गृध्रस्य पक्षे या नलिका स्वल्पवर्तुलरोमरहितांशविशेषः, तद्वत् स्थूलम् ॥ ८७ ॥

शोधनवस्त्यर्थं धन्वन्तरीयं नेत्रस्य उपादानं परिमाणादिकञ्चाह, नेत्रमिति ।—

ततो द्वादशकं यावत् मानं स्यादष्टसम्मितम् ॥ ८९ ॥
ततः परं द्वादशभिरङ्गुलैर्नेत्रदीर्घता।
मुद्गच्छिद्रं कलायाभं छिद्रं कोलास्थिरन्ध्रकम् ॥ ९० ॥
यथासङ्ख्यं भवेन्नेत्रं श्लक्ष्णं गोपुच्छसन्निभम्।
आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते ॥ ९१ ॥
कनिष्ठिकापरीणाहमग्रे च गुड़िकामुखम्।
तन्मूले कर्णिके द्वे च कार्य्ये भागाच्चतुर्थकात् ॥
योजयेत्तत्र वस्तिस्तु बन्धद्वयविधानतः ॥ ९२ ॥

वस्तिपुटकस्य उपकरणादिनिर्देशः।—

मृगाजशूकरगवां महिषस्यापि वा भवेत्।
मूत्रकोषस्य वस्तिस्तु तदलाभेन चर्मजः ॥
कषायरक्तः सुमृदुर्वस्तिः स्निग्धो दृढ़ो हितः ॥ ९३ ॥

अन्यच्च।—

निरूहस्य द्रव्यं वस्तिनिरुक्तिश्च।—

कषायक्षीरतैलैर्यो निरूहः स निगद्यते।
वस्तिभिर्दीयते यस्मात् तस्माद्वस्तिरिति स्मृतः ॥ ९४ ॥

वस्तिद्वयस्य प्रयोगक्रमः।—

तत्रानुवासनाख्यो हि वस्तिर्यः सोऽत्र कथ्यते।
पूर्वमेव ततो वस्तिर्निरूहाख्यो भविष्यति ॥ ९५ ॥

---

कलायाभं वर्त्तुलकलायाभम्। तदलाभेन मूत्रकोषस्याप्राप्त्या चर्मजः मृगादीनां चर्मविनिर्मितः ॥ ८८—९३ ॥

आस्थापनापराख्यनिरूहवस्तेर्द्रव्यं वस्तिनिरुक्तिञ्चाह, कषायेति।—"कषाय" इत्यत्र "वस्तिस्तु" इति पाठान्तरम्। वस्तिभिः मृगादीनां मूत्रकोषमयैर्वस्तिभिरित्यर्थः ॥ ९४ ॥

वस्तिद्वयस्य प्रयोगक्रममाह, तत्रेति।—पूर्वमेव इति छेदः। अनुवासनाख्यो यो वस्तिः, स एव पूर्वमेव कथ्यते, आस्थापनात् प्रागेव दीयते इत्यर्थः। ततः अनुवासनान्-न्तरम् ॥ ९५ ॥

उत्तरवस्तिः।—

निरूहादुत्तरस्यैव वस्तिः स्यादुत्तराभिधः ॥ ९६ ॥

मात्रावस्तेर्मात्रानिर्देशः।—

अनुवासनभेदश्च मात्रावस्तिरुदीरितः।
पलद्वयं तस्य मात्रा तस्मादर्द्धोऽपि वा भवेत् ॥ ९७ ॥

अनुवासनार्हानर्हाः।—

अनुवास्यस्तु रूक्षः स्यात्तीक्ष्णाग्निः केवलानिली।
नानुवास्यस्तु कुष्ठी स्यान्मेही स्थूलस्तथोदरी ॥ ९८ ॥

आस्थापनानुवासनानर्हाः।—

नास्थाप्या नानुवास्याः स्युरजीर्णोन्मादतृड्युताः।
शोथमूर्च्छाऽरुचिभय-श्वासकासक्षयातुराः ॥ ९९ ॥

सम्यक् प्रयुक्तस्य वस्तेर्गुणाः।—

शरीरोपचयं वर्णं बलमारोग्यमायुषः।
कुरुते परिवृद्धिञ्च वस्तिः सम्यगुपासितः ॥ १०० ॥

ऋतुभेदे स्नेहवस्तेः कालनिर्देशः।—

दिवा शीते वसन्ते च स्नेहवस्तिः प्रदीयते।
ग्रीष्मवर्षाशरत्काले रात्रौ स्यादनुवासनः ॥ १०१ ॥

---

उत्तरवस्तेः स्वरूपं निरुक्तिञ्चाह, निरूहादिति।—निरूहादुत्तरस्यैव निरूहानन्तर-मित्यर्थः।—उत्तराभिधो वस्तिः उत्तरवस्तिः, स च मूत्रद्वारेण देयः ॥ ९६ ॥

मात्रावस्तेः स्वरूपं मात्राञ्चाह, अनुवासनेति।—तस्य मात्रावस्तेः ॥ ९७ ॥

अनुवासनीयमाह, अनुवास्य इति।—केवलानिली दोषान्तरासंश्लिष्टवातरोगी। निषिद्धानुवासनानाह—नेति ॥ ९८ ॥

वस्त्यनर्हानाह—नास्थाप्येति ॥ ९९ ॥

वस्तिगुणमाह, शरीरोपचयमिति।—सम्यगुपासितः सम्यक्सेवितः, यथायथं कृत इत्यर्थः ॥ १०० ॥

ऋतुभेदे स्नेहवस्तिदानसमयमाह, दिवेति।—स्नेहवस्तिः अनुवासनवस्तिः ॥ १०१ ॥

अनुवासने अतिस्निग्धभोजनस्य अपकारित्वनिर्देशः।—

न चातिस्निग्धमशनं भोजयित्वाऽनुवासयेत्।
मदं मूर्च्छाञ्च जनयेत् द्विधा स्नेहः प्रयोजितः॥ १०२॥

अयोगातियोगयुक्तयोर्दोषनिर्देशः।—

हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ स्मृतौ।
अतिमात्रौ तथाऽऽनाह-क्लमातीसारकारकौ॥ १०३॥

अनुवासनस्नेहस्य उत्तमादिमात्रानिर्देशः।—

उत्तमस्य पलैः षड्भिः मध्यमस्य पलैस्त्रिभिः।
पलैकार्द्धेन हीना स्यादुक्ता मात्राऽनुवासने॥ १०४॥

अन्यच्च।—

वयोभेदे निरूहस्य मात्रानिर्देशः।—

निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरे परम्।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट्प्रसृतास्ततः॥ १०५॥
प्रसृतं वर्द्धयेदूर्द्ध्वं द्वादशाष्टादशस्य तु।
आ-सप्ततेरिदं मानं दशैव प्रसृताः परम्॥ १०६॥

---

अनुवासनात् प्राक् अतिस्निग्धभोजनं निषेधयति, न चेति।—द्विधा भोज्यविषया वस्तिविषया च इत्यर्थः॥ १०२॥

अयोगातियोगयुक्तयोः वस्त्योः दोषमाह, हीनेति।—उभौ आस्थापनानुवासनाख्यौ॥ १०३॥

अनुवासनार्थं स्नेहौषधस्य उत्तमादिमात्रामाह, उत्तमस्येति।—उत्तमस्य उत्तमबलानलविशिष्टस्य। एवं मध्यमस्यापि व्याख्या कार्य्या। पलैकार्द्धेन सार्द्धपलेन॥१०४॥

वयोभेदेन निरूहमात्रामाह, निरूहेति।—प्रथमे वत्सरे एकवर्षीयस्य शिशोः। प्रकुञ्चः पलम्। परं प्रथमवर्षादनन्तरम्। यावत् षट्प्रसृताः द्वादशपलपर्य्यन्तम्; तेन एकवर्षात् द्वादशवर्षं यावत् एकैकपलवृद्ध्या द्वादशपलं भवेदित्यर्थः। ऊर्द्ध्वं द्वादशवर्षादूर्द्ध्वमित्यर्थः, प्रत्यब्दमेकैकं प्रसृतं कृत्वा वर्द्धयेत् यावत् द्वादशप्रसृता भवन्ति; द्वादशेति छेदः, तेन द्वादशादूर्द्ध्वं त्रयोदशवर्षमारभ्य अष्टादशस्य अष्टादशवर्षीयस्य प्रसृतं पलद्वयं कृत्वा वर्द्धयेत्, तेन त्रयोदशवर्षादारभ्य प्रतिवर्षं पलद्वयवृद्ध्या अष्टादशवर्षे चतुर्विंशतिपलानि मात्राः स्युरित्यर्थः। आ-सप्ततेः सप्ततिवर्षपर्य्यन्तम्, ऊर्द्ध्व

अनुवासनस्य मात्रानिर्देशः।—

यथायथं निरूहस्य पादो मात्राऽनुवासने ॥१०७॥

अनुवासनस्य सम्यग्योगलक्षणम्।—

सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य वै।

विना पीड़ां त्रियामस्थः स सम्यगनुवासितः॥ १०८॥

अनुवासनस्य अयोगातियोगलक्षणम्।—

विष्टब्धानिलविण्मूत्रः स्नेहो हीनेऽनुवासने।

दाहक्लमपिपासार्त्ति-करस्त्वात्यनुवासने॥ १०९॥

निरूहानुवासनयोरतिप्रयोगे दोषनिर्देशः।—

स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत्।

स्नेहात्पित्तकफोत्क्लेदौ निरूहात् पवनाद्भयम्॥ ११०॥

---

चतुर्विंशतिपलं मानम्। परं सप्ततेरूर्द्ध्वं, दशैव प्रसृताः विंशतिपलानि मात्रा प्रयोज्या इत्यर्थः॥ १०५।१०६॥

निरूहमात्रातिदेशेन वयोभेदे अनुवासनस्य मात्रामाह, यथायथमिति।— यथायथं यथावयः, निरूहस्य पादो मात्राऽनुवासने निरूहस्य या मात्रा, अनुवासने तस्य पादमात्रा देया, तेन प्रथमे वत्सरे अनुवासनस्य कर्षमात्रा, एवं कर्षाभिवृद्ध्या द्वादशवत्सरे प्रकुञ्चद्वयं मात्रा स्यात्। एवं त्रयोदशादिष्वपि एतदनुसारेण मात्रा निर्णेया इति॥ १०७॥

सम्यगनुवासनलक्षणमाह, सानिल इति।—प्रत्येति प्रत्यागच्छति, बहिर्देशमिति शेषः, बहिरागच्छतीत्यर्थः। "प्रत्येति" इत्यत्र "प्राप्नोति" इति पाठान्तरम्। त्रियामस्थः पक्वाशये एव प्रहरत्रयं कृतावस्थानः। "विना पीड़ां त्रियामस्थः" इत्यत्र "ऊषाचोषौ विना शीघ्रम्" इति सुश्रुते तथा "उपद्रवं विना शीघ्रम्" इति च शार्ङ्गधरे पाठः॥१०८॥

हीनात्यनुवासनयोर्लक्षणे आह, विष्टब्धेति।—विष्टब्धानिलविण्मूत्रः विष्टब्धानि अनिलविण्मूत्राणि यस्मात् तादृशः, स्नेह इत्यस्य विशेषणं, वातमूत्रपुरीषाणां स्तम्भकरः इत्यर्थः॥ १०९॥

केवलानुवासनस्य केवलास्थापनस्य वा अतिप्रयोगनिषेधमाह, स्नेहवस्तिमिति।— एकमेव परस्परानन्तरितम्। स्नेहात् अनुवासने प्रयुक्तात् स्नेहादित्यर्थः। पित्तकफोत्क्लेदः पित्तकफयोरुद्गमः। "स्नेहात् पित्तकफोत्क्लेदः" इत्यत्र "स्नेहात् पित्तकफोत्क्लेशः"

अनुवासनानर्हाः।—

अनास्थाप्या येऽभिधेया नानुवास्यास्ते मताः।
विशेषतस्त्वभी पाण्डु-कामला-मेह-पीनसाः॥ १११ ॥
निरन्नप्लीहविड्भेदि-गुरुकोष्ठकफोदराः।
अभिष्यन्दभृशस्थूल-क्रिमिकोष्ठाढ्यमारुताः॥
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान्॥ ११२ ॥

आस्थापनानर्हाः।—

अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः।
आमातिसारी वमिमान् संशुद्धो दत्तनावनः॥ ११३ ॥
श्वासकासप्रसेकार्शो-हिक्काध्मानाल्पवह्नयः।
पायुशूलः कृताहारो बद्धच्छिद्रोदकोदरी॥
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी॥११४॥

अवस्थानुसारेण चिकित्सायाः कर्त्तव्यतादिनिर्देशः।—

न चैकान्तेन निर्दिष्टे कुर्य्यादभिनिवेशनम्।
भवेत् कदाचित् कार्य्याऽपि विरुद्धाऽभिमता क्रिया॥११५॥

---

इति तथा "क्षतक्षेमाग्निवधौ स्नेहात्" इति च पाठान्तरम्। पवनाद्वयं वायुवृद्धिः, निरन्तरनिरूहस्य रौक्ष्यातिशयकरत्वात्॥ ११० ॥

अनुवासनानर्हानाह, अनास्थाप्या इति।—निरन्न. उपवासक्लिष्टः। गुरुकोष्ठ-कफोदराः गुरुकोष्ठवन्तः कफाढ्योदरिणश्च। आढ्यमारुतः ऊरुस्तम्भी॥ १११।११२ ॥

आस्थापनानर्हानाह, अनास्थाप्या इति।—क्षतोरस्कः उरःक्षती। संशुद्धः विरिक्तः, "वमिमान्" इत्यनेन वमनस्योक्तत्वात्। दत्तनावनः दत्तनस्यः। "अल्पवह्नयः" इत्यत्र "अल्पवर्चसः" तथा "पायुशूलः" इत्यत्र "शूनपायुः" इति पाठान्तरम्। बद्धच्छिद्रोदकोदरी बद्धगुदोदरी छिद्रान्त्रोदरी जलोदरी च॥ ११३ ११४ ॥

शोधनानर्हा अपि कदाचिदवस्थावशात् शोधनमर्हन्ति तथा शोधनार्हा अपि कदाचिदवस्थावशात् शोधनं नार्हन्ति इत्याह, न चेति।—एकान्तेन अभिनिवेशनं यथोक्तमेव कार्य्यमिति निर्बन्धमित्यर्थः। भवेत् कदाचित् कार्य्याऽपि विरुद्धाऽभिमता क्रिया कदाचित् विरुद्धाऽपि शास्त्रानभिमताऽपि क्रिया अभिमता इष्टा, अत एव

अवस्थानुसारेण निषिद्धाया: कर्त्तव्यत्वे दृष्टान्तः।—

छर्दि-हृद्रोग-गुल्मार्त्ते वमनं स्वे चिकित्सिते।
अवस्थां प्राप्य निर्दिष्टं कुष्ठिनां वस्तिकर्म च ॥ ११६ ॥

[ इत्यनुवासनः ]।

अथ निरूहमाह—

निरूहप्रयोगस्य दिनकालादिनिर्देशः।—

अनुवास्य स्निग्धतरं तृतीयेऽह्नि निरूहयेत्।
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ॥
अभ्यक्तस्वेदितोत्सृष्ट-मलं नातिबुभुक्षितम् ॥११७॥

किञ्चिदावृत्ते इत्यल्पस्खलिते। तृतीयेऽह्नि प्रायोवादात्, पञ्चमेऽप्यह्नि क्रियते; यदाह वाग्भटः,—"पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे"। निरूहयेदिति दोषं निर्हरेदित्यर्थः, अत एवाह सुश्रुतः, यथा—"दोषनिर्हरणाच्छरीररोहणाद्वा निरूहः" इति। अस्यास्थापनमित्यपि नाम; "वयःस्थापनादायुःस्थापनाद्वा" आस्थापनमिति सुश्रुत एव।

कार्य्या भवेत्, तथा च चरकेणाप्युक्तम्—"उत्पद्यते हि साऽवस्था देशकालबलं प्रति। यस्यां कार्य्यमकार्य्यं स्यात् कर्म कार्य्यञ्च वर्जयेत् ॥" इति ॥ ११५ ॥

अवस्थावशात् निषिद्धस्य कार्य्यत्वे दृष्टान्तमाह, छर्दिरिति।—स्वे चिकित्सिते वमनादिचिकित्साधिकारे। छर्द्यादिरोगिणो निषिद्धवमना अपि यथा अवस्थावशात् कदाचित् वमनमर्हन्ति, एवं निषिद्धवस्तयोऽपि कदाचिदात्ययिके व्याधौ वस्त्युचिताः भवन्ति, अतो ज्ञानवान् भिषगातुरावस्थां विविच्य शोधनं प्रयुञ्जीत, निर्दिष्टे एव विषये एकान्ताभिनिवेशं न कुर्य्यादिति निष्कर्षः। "कुष्ठिनां वस्तिकर्म च" इत्यत्र "वस्तिकर्म च योजयेत्" इति पाठान्तरमसङ्गतम् ॥ ११६ ॥

निरूहवस्तिप्रयोगस्य दिनकालादिकमाह, अनुवास्येति।—स्निग्धतरं सम्यक्स्निग्ध-मित्यर्थः, नातिस्निग्धमिति यावत्, अतिस्निग्धस्य निरूहनिषेधात्। "स्निग्धतरम्" इत्यत्र "स्निग्धतनुम्" इति पाठान्तरम्। तृतीयेऽह्नि अनुवासनात्तृतीये दिवसे। किञ्चिदावृत्ते किञ्चिदपगते इत्यर्थः। अभ्यक्तस्वेदितोत्सृष्टमलम् अभ्यङ्गविधया स्निग्धं स्विन्नं त्यक्तमूत्रपुरीषञ्च ॥ ११७ ॥

विरेचनादिप्रयोगे दिनावधिनिर्देशः।—

पञ्चाद्विरेको वान्तस्य ततः पश्चात् निरूहणम्।
सद्यो निरूढ़ोऽनुवास्यः सप्तरात्राद्विरेचितः॥ ११८॥

दोषभेदान्निरूहाङ्गानां मात्रानिर्देशः।—

मधुस्नेहनकल्काख्य-कषायावापतः क्रमात्।
त्रीणि षट् द्वे दश त्रीणि पलान्यनिलरोगिषु॥ ११९॥
पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम्।
षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम्॥ १२०॥

स्नेहनं पक्वस्नेहः, आमस्य निषिद्धत्वात्, "न * चामं प्रणयेत् स्नेहं स ह्यभिष्यन्दयेद्गुदम्" इति दृढ़बलवचनात्। पक्वस्नेहश्च वातव्याधौ निर्दिष्टः नारायण-प्रसारणी-सैन्धवादितैलादिकः, एवमनुवासनेऽपि। कल्को मदनफलादीनाम्। कषायो दशमूलादीनाम्। आवापः काञ्जिक-जम्बीर-रस-मांसरसादीनाम्। त्रीणि इत्यादि।—वातरोगे क्रमात् यथाक्रमं मधु-

---

विरेचनादीनां कालावधिमाह, पञ्चादिति।—वान्तस्य पञ्चाद्विरेकः वमनात् पञ्चदशदिवसानन्तरं विरेचनं दातव्य, ततः विरेचनानन्तरं पश्चात् पञ्चदशदिवसात् परं निरूहणं कर्त्तव्यम्। "ततः पश्चात्" इत्यत्र "ततः पक्षात्" इति सुश्रुते पाठः। निरूढः आस्थापितः, सद्यस्तृतीयेऽह्नीत्यर्थः, "सद्यस्तदहरेव" इति केचित्, अनुवास्यः, तथा विरेचितः सप्तरात्रात् सप्तदिनानन्तरम्, अष्टमे दिने अनुवास्यः। स्निग्धं स्विन्नञ्च पुरुषं वामयित्वा कृतसंसर्जनं पक्षानन्तरं विरेचयेत्, ततः सप्तदिनानन्तरमनुवास्य तृतीये दिवसे निरूहयेत्, निरूहस्य रूक्षत्वात् स्नेहनार्थं निरूढं पुनस्तृतीयेऽह्नि अनुवासयेत्। यस्तु अनुवासनं नार्हति, स विरेचनानन्तरं पश्चात् निरूहयितव्यः, "ततः पश्चान्निरूहणम्" इत्युक्तत्वात् इति निर्गलितार्थः॥ ११८॥

निरूहवस्तौ देयमध्वादीनां मानमाह, मध्विति।—कल्कः आख्या यस्य सः कल्काख्यः कल्क इत्यर्थः, अत्र कल्क इत्यनेनैवेष्टसिद्धौ आख्याशब्देनेदं बोधयति यत् निरूहणे कल्कः एव देयः न तु कल्कभेदचूर्णम् इति। आवापः प्रक्षेपः। आवापतः आवापानामित्यर्थः। अत्र "सर्वविभक्तिभ्यस्तसिल्" इत्यनेन षष्ठ्यास्तसिल्॥११९।१२०॥

---

* आमम् अपक्वम्। सः अपक्वस्नेहः। अभिष्यन्दयेत् क्लेदयेत्। एवमनुवासनेऽपि आमस्नेहो निषिद्ध इत्यर्थः।

नस्त्रीणि पलानि, स्नेहस्य षट्, कल्कस्य द्वे, कषायस्य दश, त्रीणि च आवाप्यस्य। एवं पित्ते मधुनश्चत्वारि, स्नेहस्य च चत्वारि, कल्कस्य द्वे, कषायस्य द्विपञ्चेति दशेत्यर्थः, आवाप्यस्य च चतुष्टयमिति। एवं कफे मधुनः षट्पलानीत्यादि योज्यम्।

शार्ङ्गधरमतमाह—

निरूहस्य बहुधात्वनिर्देशः।—

निरूहवस्तिर्बहुधा भिद्यते कारणान्तरैः।
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥ १२१ ॥

निरूहस्य पर्य्यायादिनिर्देशः।—

निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः।
स्वस्थानस्थापनाद्दोष-धातूनां स्थापनं मतम् ॥ १२२ ॥

निरूहस्य श्रेष्ठादिमात्रानिर्देशः।—

निरूहस्य प्रमाणञ्च प्रस्थं पादोत्तरं परम्।
मध्यमं प्रस्थमुद्दिष्टं हीनञ्च कुडवास्त्रयः ॥ १२३ ॥

आस्थापनानर्हाः।—

अतिस्निग्धोत्क्लिष्टदोषः क्षतोरस्कः कृशस्तथा।
आध्मानच्छर्द्दिहिक्कार्शः-कासश्वासप्रपीड़ितः ॥ १२४ ॥
गुदशोथातीसारार्त्तो विसूचीकुष्ठसंयुतः।
गर्भिणी मधुमेही च नास्थाप्यश्च जलोदरी ॥ १२५ ॥

आस्थापनार्हाः।—

वातव्याधावुदावर्त्ते वातासृग्विषमज्वरे।
मूर्च्छातृष्णोदरानाह-मूत्रकृच्छ्राश्मरीषु च ॥ १२६ ॥

शार्ङ्गधरोक्तनिरूहमाह, निरूहेति।—तैः कारणभेदैरित्यर्थः ॥ १२१ ॥

निरूहस्य नामान्तरं तस्य च निरुक्तिमाह, निरूहस्येति।—स्वस्थानस्थापनात् विमार्गगतानां दोषधातूनां स्वस्थाने आनयनादित्यर्थः ॥ १२२ ॥

निरूहस्य श्रेष्ठादिमात्रामाह, निरूहस्य प्रमाणमिति।—प्रस्थं पादोत्तरं सार्द्धशराव-द्वयम्। परम् उत्तमम्। कुडवास्त्रयः द्वादशपलानि ॥ १२३ ॥

अनास्थाप्यानाह—अतीति ॥ १२४।१२५ ॥

वृद्धयस्त्वग्दरमन्दाग्नि-प्रमेहेषु निरूहणम्।
शूलेऽस्रपित्ते हृद्रोगे योजयेद्विधिवद्बुधः॥ १२७॥

निरूहप्रयोगविधिः।—

उत्सृष्टानिलविण्मूत्रं स्निग्धं स्विन्नमभोजितम्।
मध्याह्ने गृहमध्ये तु यथायोग्यं निरूहयेत्॥ १२८॥

निरूहे स्नेहवस्तिविध्यतिदेशः।—

स्नेहवस्तिविधानेन बुधः कुर्य्यान्निरूहणम्॥ १२९॥

प्रयोगानन्तरं कर्त्तव्यनिर्देशः।—

जाते निरूहे च ततो भवेदुत्कटकासनः।
तिष्ठेन्मुहूर्त्तमात्रन्तु निरूहागमनेच्छया॥ १३०॥
अनायान्तं मुहूर्त्तान्ते निरूहं शोधनैर्हरेत्।
निरूहैरेव मतिमान् क्षारमूत्राम्लसैन्धवैः॥ १३१॥

सम्यङ्निरूहस्य लक्षणमाह चिकित्सामृते यथा—

सम्यग्योजितनिरूहलक्षणम्।—

न धावत्यौषधं पायुं न तिष्ठत्यवलिप्य च।

आस्थाप्यानाह—वातव्याधाविति॥ १२६।१२७॥

प्रयोगविधिमाह, उत्सृष्टेति।—अभोजितं "न तु भुक्तवते देयमास्थापनमिति स्थितिः। आमं तद्धि हरेत् भुक्तं छर्दिं दोषांश्च कोपयेत्॥" इति भुक्तवतः आस्थापन-निषेधात्। मध्याह्ने अपगतप्रायमध्याह्ने, "मध्याह्ने किञ्चिदावृत्ते" इति दर्शनात्॥ १२८॥

अतिदेशेन निरूहविधिमाह, स्नेहेति।—स्नेहवस्तिविधानेन अनुवासनोक्त-रीत्या॥ १२९॥

कृतनिरूहस्य कर्त्तव्यमाह, जाते इति।—उत्कटुकासनः ऊर्द्ध्वजानुः सन् उपविष्ट इत्यर्थः। कथमुत्कटुकासनो भवेत्? इत्याह, निरूहागमनेच्छया दत्तस्य शीघ्राद्बहिर्निःसरणार्थम्। कियन्तं कालं तथा भवेत् इत्याह, मुहूर्त्तमात्रम् अल्पसमयम्, निरन्तराव्यवहितमित्यर्थः। मुहूर्त्तान्ते अनागते कर्त्तव्यमाह, अनायान्त-मिति।—क्षारमूत्राम्लसैन्धवैः क्षारादियुक्तैः शोधनैः शोधनद्रव्ययुक्तैः निरूहवस्तिभि-रेव हरेत् बहिरानयेत्॥ १३०।१३१॥

चिकित्सामृतप्रोक्तं सम्यक् निर्गतस्य निरूहस्य लक्षणमाह, नेति।—औषधं निरूहणद्रव्यादिरूपं निरूहौषधं पायुं न धावति लघुतया प्रत्यागमनाय इत्थं च

न करोति च सीमन्तं स निरूहः सुयोजितः ॥ १३२ ॥

कल्कस्नेहकषायाणामविवेकाद्भिषग्वरैः ।

वस्तिषु कल्पितः प्रोक्तस्तस्यादानं तथाऽर्थवत् ॥ १३३ ॥

न धावति न पृथग्भवति । सीमन्तं तैलादिरेखाम् । एतेन मधु-स्नेहादीनाम् अपृथग्भाव इत्युक्तं भवति, अत एवोक्तं कल्केत्यादि ।

मृदुकोष्ठे वस्तिप्रयोगविधिः ।—

पूर्वोक्तेन विधानेन गुदे वस्तिं निधापयेत् ।

त्रिंशन्मात्रास्थितो वस्तिस्ततस्तूत्कटुको भवेत् ॥ १३४ ॥

उत्कटुको भवेदिति वस्तेरागमनाय । उत्कटुक इति उन्नत इति लोके । * एतच्च मृदुकोष्ठं प्रति वेगिनश्च ।

मात्रास्वरूपनिर्देशः ।—

यावत पर्य्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ।

निमेषोन्मेषकालो वा सा मात्रा परिकीर्त्तिता ॥ १३५ ॥

करोतीत्यर्थः, नातितरलं भवतीति यावत्, तथा अतिसान्द्रतया औषधं पाणिमव-लिप्य न तिष्ठति, तथा सीमन्त सीमन्तवत तैलादिरेखादिक, न करोति स निरूहः सुयोजितः सुमिश्रितः, वस्तिदानकाले एवम्प्रकारेण चेत् वस्तिद्रव्य मिश्रित भवेत, तदा स एव निरूहः सम्यक् कार्य्यसाधकत्वात् सुयोजित इति मन्तव्यम् । अविवेकात् अपृथग्भावात्, सम्यक् मिश्रीभावादित्यर्थः । तस्य उक्तरूपेण सुयोजितस्य वस्तेः, आदानं प्रयोग इति यावत्, तथाऽर्थवत् सुयोजितस्य वस्तेर्योऽर्थः कर्मसाधन-रूपस्तद्वत् । "तस्यादानं तथाऽर्थवत्" इत्यत्र "तस्य दानं यथार्थवत" इति सुश्रुते पाठः ॥ १३२।१३३ ॥

मृदुकोष्ठं प्रति वस्तिप्रयोगविधिमाह पूर्वोक्तेनेति ।—पूर्वोक्तेन विधानेन उत्सृष्टा-निलविण्मूत्र तथा न धावत्यौषधं पाणिम् इत्याद्युक्तविधानेनेत्यर्थः । त्रिंशन्मात्रास्थितः वस्तिप्रयोगानन्तर त्रिंशद्वारं निमेषोन्मेषे यावान् समयो गच्छति तावन्तं कालमवस्थितः सन् इत्यर्थः ॥१३४॥

त्रिंशन्मात्रा इत्युक्तं, तस्या मात्रायाः स्वरूपमाह, यावदिति ।—पर्य्येति पर्य्या-गच्छति, परिवेष्टयतीत्यर्थः । दक्षिणं हस्ताग्रमित्यन्वयः ॥ १३५ ॥

---

* एतत्—त्रिंशन्मात्रावस्थानम् । वेगिनं—सञ्जातपुरीषवेगम् ।

अवेगिनं क्रूरकोष्ठञ्च प्रति यथा—

क्रूरकोष्ठे वस्तिप्रयोगविधिः।—

जानुमण्डलमावेष्ट्य दत्तं दक्षिणपाणिना।
श्लेष्टनैवमच्छटाशब्द शतं तिष्ठेदवेगवान्॥ १३६॥
द्वितीयं वा तृतीयं वा चतुर्थं वा यथाऽर्हतः।
पुटं प्रदापयेद्वैद्यो बुद्धा रोगबलाबलम्॥ १३७॥

श्लेष्टनेत्रो वहिष्कृतनलिकः। छटा "तुड़ो" इति ख्याता। यथाऽर्हत इति यो यावन्तं पुटमर्हति तस्मै तावन्तं पुटं दापयेदित्यर्थः।

वस्तिनिवृत्तिविधिः।—

सम्यङ्निरूढ़लिङ्गे तु प्राप्ते वस्तिं निवारयेत्॥ १३८॥

अन्यच्च।—

निरूहस्य सम्यग्योगलक्षणम्।—

नाभिप्रदेशञ्च कटिञ्च गत्वा कुक्षिं समालोड्य पुनश्च सृष्टः।
संस्निह्य कायं सपुरीषदोषः सम्यक् सुखेनैति च यः स वस्तिः॥ १३९॥
प्रसृष्टविण्मूत्रसमीरणत्वं रुच्यग्निवृद्ध्याशयलाघवानि।
वेगोपशान्तिः प्रकृतिस्थता च बलञ्च तत् स्यात् सुनिरूढलिङ्गम्
॥ १४०॥

क्रूरकोष्ठस्य अवेगिनश्च अवस्थानकालनियममाह, जान्विति।—अवेगवान् पुरुषः वस्तिनलबहिष्करणानन्तरं दक्षिणपाणिना जानुमण्डलं वेष्टयित्वा शतच्छोटिकोपयोगिकालमपेक्ष्य तत उत्कटुको भवेत् इत्यर्थः॥ १३६—१३८॥

सम्यङ्निरूढस्य लक्षणमाह, नाभीति।—सृष्ट प्रयुक्तः, यः वस्तिः नाभ्यादिकं गत्वा पुनः कुक्षिं समालोड्य कायं संस्निह्य च। "सृष्टम्" इति पाठः असाधुः। "सृष्टः" "सर्वम्" इति वा साधुः। सर्वमिति पाठे—कायमित्यस्य विशेषणम्। चरके "पार्श्वम्" इति पाठः। सपुरीषदोषः दोषो वातादिः पुरीषदोषाभ्यां सह, सुखेन प्रयत्नं विनैव सम्यक् एति बहिरागच्छति, स वस्तिः सुप्रयुक्तः सम्यक् प्रयुक्तश्च वस्तिरित्यर्थः। आशयः मलाशयः तस्य लाघवम्। वेगोपशान्तिः व्याधिवेगोपशमनं पुरीषवेगानागमनं वा। "वेगोपशान्तिः" इत्यत्र "रोगोपशान्तिः" इति चरके पाठः॥ १३९।१४०॥

असम्यङ्निरूहलक्षणमाह —

दुष्प्रयुक्तनिरूहलक्षणम् ।—

स्यात् हृच्छिरोरुक् गुदकुक्षिलिङ्गे शोथः प्रतिश्या परिकर्त्तिका च ।
ह्ल्लासिकामारुतमूत्रसङ्गः श्वासो न सम्यक् च निरूहिते स्यात्
॥ १४१ ॥

अयोगातियोगयोरातिदेशिकलक्षणम् ।—

अयोगस्यातियोगस्य निरूहस्य विरेकवत् ॥ १४२ ॥

[ इति निरूहवस्तिविधिः ] ।

अथोत्तरवस्तिमाह, यदाह शार्ङ्गधरः,—

उत्तरवस्तेर्नेत्रपरिमाणादिनिर्देशः ।—

अतःपरं प्रवक्ष्यामि वस्तिमुत्तरसंज्ञितम् ।
द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकम् ॥
मालतीपुष्पवृन्ताभं छिद्रं सर्षपनिर्गमम् ॥ १४३ ॥

वयोभेदेन स्नेहमात्रानिर्देशः ।—

पञ्चविंशतिवर्षाणामधो मात्रा द्विकार्षिकी ।
तदूर्द्ध्वं पलमात्रा च स्नेहस्योक्ता भिषग्वरैः ॥ १४४ ॥

असाधुनिरूढस्य लक्षणमाह, स्यादिति ।—परिकर्त्तिका गुदे कर्त्तनवत् पीडा । हृल्लासिका हृल्लास एव ॥ १४१ ॥

अयोगातियोगयुक्तयोः निरूहयोर्लक्षणमतिदेशेनाह, अयोग इति ।—विरेकवत् विरेचनस्य अयोगातियोगयोर्यत् लक्षणं निरूहस्यापि अयोगातियोगयोस्तदेव लक्षणमिति ॥ १४२ ॥

शार्ङ्गधरोक्तमुत्तरवस्तिमाह, अतःपरमिति ।—मूत्रमार्गेण देयो वस्तिरुत्तरवस्तिः । उत्तरवस्त्यर्थं नेत्रविधिमाह, द्वादशेति ।—मध्ये नेत्रमध्यदेशे । मालतीपुष्पवृन्ताभं मालतीपुष्पवृन्तवत् स्थूलं सूक्ष्ममुज्ज्वलञ्च नेत्रं कार्य्यम ॥ १४३ ॥

वयोभेदेन स्नेहमात्रामाह, पञ्चविंशतीति ।—पञ्चविंशतिवर्षाणामधः इति चतुर्विंशतिवर्षपर्य्यन्तमित्यर्थः । तदूर्द्ध्वं पञ्चविंशतिवर्षमारभ्येत्यर्थः ॥ १४४ ॥

उत्तरवस्तिप्रयोगविधिः ।—

अथास्थापनशुद्धस्य तृप्तस्य स्नानभोजनैः ।
स्थितस्य जानुमात्रे च पीठेऽन्विष्य शलाकया ॥ १४५ ॥
स्निग्धया मेढ्रमार्गेण ततो नेत्रं नियोजयेत् ।
शनैः शनैर्घृताभ्यक्तं मेढ्ररन्ध्रेऽङ्गुलानि षट् ॥ १४६ ॥
ततोऽवपीडयेद्वस्तिं शनैर्नेत्रञ्च निर्हरेत् ।
ततः प्रत्यागते स्नेहे स्नेहवस्तिक्रमो हितः ॥ १४७ ॥

स्त्रीणां वस्तिनेत्रस्य परिमाणादिनिर्देशः ।—

स्त्रीणां कनिष्ठिकास्थूलं नेत्रं कुर्याद्दशाङ्गुलम् ।
मुद्गप्रवेशं योज्यञ्च योन्यन्तश्चतुरङ्गुलम् ॥ १४८ ॥

स्त्रीबालयोर्मूत्रमार्गे देयनेत्रप्रमाणनिर्देशः ।—

द्व्यङ्गुलं मूत्रमार्गे च सूक्ष्मं नेत्रं नियोजयेत् ।
मूत्रकृच्छ्रविकारेषु बालानामेकमङ्गुलम् ॥ १४९ ॥

यदाह वाग्भटः,—

वाग्भटमते स्त्रीणामुत्तरवस्तिप्रयोगे कालादिनिर्देशः ।—

स्त्रीणामार्त्तवकाले तु योनिर्गृह्णात्यपावृता ।
विदधीत तदा तस्मादनृतावपि चात्यये ॥ १५० ॥
योनिविभ्रंशशूलेषु योनिव्यापदसृग्दरे ।

---

वस्तिदानविधिमाह, अथेति ।—जानुमात्रे जानुप्रमाणोन्नते । "जानुमात्रेण" इति पाठे—जानुप्रमाणोन्नतया उपलक्षिते, जानुमात्रोन्नते इत्यर्थः, पीठे आसने स्थितस्य । स्निग्धया घृताद्यभ्यक्तया शलाकया, अन्विष्य अश्मर्य्यादिकमनुसन्धाय । ततः वस्तिदानानन्तरम् । वस्तिं स्नेहादिपूर्णवस्तिपुटकमित्यर्थः । निर्हरेत् बहिष्कुर्य्यात ॥ १४५—१४७ ॥

स्त्रीणां नेत्रप्रमाणमाह, स्त्रीणामिति ।—कनिष्ठिकास्थूलं कनिष्ठाङ्गुलिवत् स्थूलम् । दशाङ्गुलं दशाङ्गुलदीर्घम् । मुद्गप्रवेश्य मुद्गप्रवेशार्हच्छिद्रविशिष्टम ॥ १४८ ॥

स्त्रीबालयोर्मूत्रमार्गे देयस्य नेत्रस्य प्रमाणमाह, द्व्यङ्गुलमिति ।—द्व्यङ्गुलं मूत्रमार्गे च स्त्रीणामेव मूत्रस्रोतसि द्व्यङ्गुल नेत्र प्रवेशयेत् । बालानां कन्यकानाम् ॥ १४९ ॥

वाग्भटोक्तं स्त्रीणामुत्तरवस्तिदानकालमाह, स्त्रीणामिति ।—योनिर्गृह्णात्यपावृता विवृता योनिः गृह्णाति, वस्तिमिति शेषः, आर्त्तवकाले जरायुमुखविकाशनात् । तदा आर्त्तवकाले, विदधीत, वस्तिमिति शेषः । अनृतावपि आत्यये योनिविभ्रंशादौ

शनैर्निष्कम्पमाधेयं सूक्ष्मं नेत्रं विचक्षणैः ॥ १५१ ॥

स्त्रीणां योनि-मूत्रमार्गयोः बालानां मूत्रमार्गे च स्नेहमात्रानिर्देशः ।—

योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिकी ।
मूत्रमार्गे पलोन्माना बालानाञ्च द्विकार्षिकी ॥ १५२ ॥

स्त्रीणां वस्तिप्रयोगविधिः ।—

उत्तानायै स्त्रियै दद्यादूर्द्ध्वजान्वै विचक्षणः ॥ १५३ ॥

अप्रत्यागच्छति वस्तौ कर्त्तव्यनिर्देशः ।—

अप्रत्यागच्छति भिषग्वस्तावुत्तरसंज्ञिते ।
भूयो वस्तिं निदध्याच्च संयुक्तं शोधनैर्गणैः ॥ १५४ ॥

योनौ दत्तवस्त्यनागमने कर्त्तव्यनिर्देशः ।—

फलवर्त्तिं निदध्यात् वा योनिमार्गे दृढ़ां भिषक् ।
सूत्रैर्विनिर्मितां स्निग्धां शोधनद्रव्यसंयुताम् ॥ १५५ ॥

वस्तिदेशदाहे वस्तिविधिः ।—

दह्यमाने तदा वस्तौ दद्याद्वस्तिं विशारदः ।
क्षीरिवृक्षकषायेण पयसा शीतलेन वा ॥ १५६ ॥

---

आत्ययिके व्याधौ अनार्त्तवकालेऽपि वस्तिं विदधीत इत्यर्थः । कथं विदधीत ? इत्याह, शनैरिति ।—निष्कम्पं यथा तथा प्रयोगकाले हस्तो यथा न कम्पेत तथा इत्यर्थः ॥ १५०।१५१ ॥

स्त्रीणां योनिमार्ग-मूत्रमार्गयोस्तथा बालानाञ्च मूत्रमार्गे स्नेहमात्रामाह, योनिमार्गेष्विति ।—योनिमार्गेषु अपत्यपथेषु इत्यर्थः । बालानां कन्यकानाम् ॥ १५२ ॥

वस्तिदानविधिमाह, उत्तानायै इति ।—उत्तानायै ऊर्द्धमुखशायिन्यै । ऊर्द्धजान्वै जानुद्वयं सङ्कोच्य ऊर्द्धीकृत्य च स्थितायै ॥ १५३ ॥

अनिसृते वस्तौ कर्त्तव्यमाह, अप्रत्यागच्छतीति ।—संयुक्तं शोधनैर्गणैः वस्तिशोधकद्रव्यसमूहैः संसृष्टम् । "संयुक्तम्" इत्यत्र "संयुक्तैः" इति पाठान्तरम् ॥ १५४ ॥

योनौ दत्तवस्तावनिःसृते कर्त्तव्यमाह, फलवर्त्तिमिति ।—फलवर्त्तिं मदनफलादिनिर्मितां वर्त्तिम् ॥ १५५ ॥

द्रव्याणामनिःसरणात् वस्तिदाहे उपक्रममाह, दह्यमाने इति ।—वस्तौ वस्तिदेशे । वस्तिम् उत्तरवस्तिम् । क्षीरिवृक्षकषायेण न्यग्रोधादीनां क्वाथेन ॥ १५६ ॥

उत्तरवस्तेर्गुणः निषिद्धस्थाननिर्देशश्च।—

वस्तिः शुक्ररुजः पुंसां स्त्रीणामार्त्तवजां रुजाम्।
हन्यादुत्तरवस्तिस्तु नोचितो मेहिनां क्वचित्॥ १५७॥

अतिदेशेन सम्यग्योगलक्षणादिनिर्देशः।—

सम्यक् दत्तस्य लिङ्गानि व्यापदः क्रम एव च।
वस्तेरुत्तरसंज्ञस्य समानं स्नेहवस्तिना॥ १५८॥

फलवर्त्तेः स्वरूपं विधिश्च।—

घृताभ्यक्ते गुदे क्षेप्या श्लक्ष्णा स्वाङ्गुष्ठसन्निभा।
मलप्रवर्त्तिनी वर्त्तिः फलवर्त्तिश्च सा स्मृता॥ १५९॥

आनन्दसेनस्त्वाह, वस्तिमात्रा यथा—

आनन्दसेनमते उत्तरवस्त्यादीनां मात्रानिर्देशः।—

अनुवासनभेदश्च मात्रावस्तिरुदीरितः।
पलार्द्धमुत्तरो वस्तिर्मात्रावस्तिः पलद्वयम्॥ १६०॥
यापना स्नेहवस्तिश्च द्वावेतौ षट्पलान्वितौ।
पिच्छावस्तिर्भवेत् प्रस्थः पादोनः कीर्त्तितोऽपरः॥१६१॥

यापनावस्तिरिति वातविकारयापनार्थं यो वस्तिरित्यर्थः।

अथ धूमपानविधिः—

धूमावश्यायजदोषनिर्देशः।—

धूमः पित्तानिलौ कुर्य्यादवश्यायः कफानिलौ॥ १६२॥

---

उत्तरवस्तेर्गुणमाह, वस्तिरिति।—वस्तिरुत्तरवस्तिः॥ १५७॥

सम्यग्योगादीनां लक्षणमतिदेशेन निर्दिशति, सम्यगिति।—क्रमः चिकित्सा-प्रणाली॥ १५८॥

फलवर्त्तेः स्वरूपमाह—घृताभ्यक्ते इति॥ १५९॥

आनन्दसेनमते उत्तरवस्त्यादीनां मात्रामाह, अनुवासनेति।—पादोनः कीर्त्तितोऽपरः अपरः एतद्व्यतिरिक्तासिद्धवस्त्यादिः पादोनः प्रस्थः, चतुर्दश पलानीत्यर्थः।
"पादोनः" इत्यत्र "सपादः" इति पाठान्तरम्॥ १६०।१६१॥

अथ धूमपानविधिं वक्तुमादौ धूमावश्याययोर्दोषमाह, धूम इति।—धूमः नासामुखप्रविष्टः धूम इत्यर्थः। अवश्यायः,—अवश्यायशब्देनात्र कुज्झटिकाऽभिमतास्या, धूमसदृशत्वात् धूममहिषीति संज्ञान्तरत्वाच्च॥ १६२॥

धूमपानगुणमाह—

धूमपानसाध्यरोगाः ।—

गौरवं शिरसः शूलं पीनसोऽर्द्धावभेदकः ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥ १६३ ॥
दन्तदौर्बल्यमास्रावः श्रोत्रघ्राणाक्षिदोषजः ।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकम् ॥ १६४ ॥
हनु-मन्याग्रहः कण्डूः क्रिमयो मुखपाण्डुता ।
श्लेष्मप्रसेको वैस्वर्य्यं गलगण्डाधिजिह्वके ॥ १६५ ॥
खालित्यं पिञ्जरत्वञ्च केशानां पतनं तथा ।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥
धूमपानात् प्रशाम्यन्ति बलं भवति चाधिकम् ॥ १६६ ॥

अकालातिपीतयोर्धूमयोर्दोषाः तत्प्रतीकारश्च ।—

रक्तपित्तान्ध्यबाधिर्य्य-तृण्मूर्च्छामदमोहकृत् ।
धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्मतः ॥ १६७ ॥

पञ्चविधधूमानां नामानि ।—

प्रायोगिकः स्नैहिकश्च वैरेचनिक एव च ।
कासहारी वामनीयो धूमः पञ्चविधो मतः ॥ १६८ ॥

प्रायोगिकः प्रयोगः स्वस्थस्य। स्नेहकारी स्नैहिकः। दोषविरेचनात् वैरेचनिकः। कण्टकार्य्यादिभिर्धूमपानात् कासहरः। वमनकारी वामनीयः।

---

धूमपानगुणमाह, गौरवमिति ।—श्रोत्रघ्राणाक्षिदोषजः आस्रावः कर्णादिस्रावः। अधिजिह्वकं जिह्वागतरोगभेदः। केशानां पिञ्जरत्वं पिङ्गलवर्णता, पतनमपि केशानाम। क्षवथुः छिक्का, "हाचि" इति लोके ॥ १६३—१६६ ॥

अकाले अतिशय्येन च पीतस्य धूमस्य सप्रतीकारं दोषमाह, रक्तपित्तेति।—तत्र अविधिपीतधूमजरक्तपित्तादौ ॥ १६७ ॥

कार्य्यभेदेन धूमस्य पञ्चविधत्वमाह, प्रायोगिकः इति।—प्रयोगे स्वस्थस्य नित्यप्रयोगे हितः प्रायोगिकः। वैरेचनिकः शिरःस्थकफनिःसारकः ॥ १६८ ॥

धूमोद्गीरणद्वारनिर्देशः।—

वक्त्रेणैव वमेद्धूमं नस्तो वक्त्रेण वा पिबन् ॥ १६९ ॥

दोषाणामवस्थानविशेषे धूमपानद्वारनिर्देशः।—

उरःकण्ठगते दोषे वक्त्रेण धूममापिबेत्।
नासया तु पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये ॥ १७० ॥

धूमपञ्चकानां द्रव्यनिर्देशः।—

गन्धैरकुष्ठतगरैर्वर्त्तिः प्रायोगिकी मता।
स्नैहिकी तु मधूच्छिष्ट-स्नेहगुग्गुलुमज्जकैः ॥ १७१ ॥
शिरोविरेचनद्रव्यैर्वर्त्तिर्वैरेचने मता।
कासघ्नैरेव कासघ्नी वामनैर्वामनी मता ॥ १७२ ॥

निषेधमाह—

धूमपानानर्हाः।—

योज्या न पित्तरक्तार्त्ति-विरिक्तोदरमेहिषु।
तिमिरोर्द्ध्वानिलाध्मान-रोहिणी-दत्तवस्तिषु ॥ १७३॥

---

येन द्वारेण धूमः पातव्यः येन वा त्यक्तव्यस्तदाह, वक्त्रेणेति।—नस्तः नासिकया वक्त्रेण मुखेन वा धूमं पिबन् वक्त्रेणैव वमेत् उद्गिरेत्, न तु नासया वमेत इत्येवकारार्थः, तथाकरणे दोषश्रुतेः, यदुक्तं चरके—"प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी" इति ॥ १६९ ॥

नस्तो वक्त्रेण वा पिबन् इत्युक्तं, तत्र कुत्र नस्तः कुत्र वा वक्त्रेण पातव्य इत्याकाङ्क्षायां दोषस्य अवस्थानभेदात् धूमपानमार्गमाह—उरः इति ॥१७०॥

पञ्चविधधूमानां पृथक् पृथगुपादानसामग्रीमाह, गन्धैरिति।—अकुष्ठतगरैः कुष्ठतगरविरहितैः, कुष्ठतगरयोरतितीक्ष्णत्वेन मस्तुलुङ्गस्रावकत्वात्, गन्धैः अगुर्वादिभिर्गन्धद्रव्यैः, वर्त्तिः धूमवर्त्तिः। मधूच्छिष्ट सिक्थक, "मोम" इति प्रसिद्धम्। स्नेहशब्देनात्र घृतवसयोर्ग्रहणं, "वसाघृतमधूच्छिष्टै." इति चरकवचनात्। शिरोविरेचनद्रव्यैः श्वेताज्योतिष्मत्यादिभिश्चरकोक्तैः, देवदालीकट्फलादिभिर्वा। कासघ्नैः बृहतीकण्टकार्य्यादिभिः सुश्रुतोक्तैः। वामनैः वमनकारकैः स्नायुचर्मखुरशृङ्गादिभिः सुश्रुतोक्तैः ॥ १७१।१७२ ॥

धूमानर्हानाह, योज्या इति।—तिमिरः चक्षूरोगभेदः। ऊर्द्ध्वानिलः ऊर्द्ध्ववायुः,

मत्स्यमद्यदधिक्षीद्र-क्षीरस्नेहविषाशिषु।
शिरस्यभिहते पाण्डु-रोगे जागरिते निशि॥ १७४॥

रोहिणी कण्ठरोहिणी। आशिष्विति मत्स्यादिभिः सम्बध्यते पाने भोजने च।

अथ कवलगण्डूषधारणमाह।

यदाह शार्ङ्गधरः,—

गण्डूषकवलयोश्चतुर्विधनामनिर्देशः।—

चतुर्विधः स्याद्गण्डूषः स्नैहिकः शमनस्तथा।
शोधनो रोपणश्चैव कवलश्चापि तद्विधः॥ १७५॥

गण्डूषकवलचतुष्टयसाध्यदोषाणां चतुर्विधयोस्तयोर्द्रव्याणाञ्च निर्देशः।—

स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः।
पित्ते कट्वम्ललवणैरुष्णैः संशोधनः कफे॥ १७६॥
कषायतिक्तमधुरैः कटूष्णै रोपणो व्रणे।
चतुःप्रकारो गण्डूषः कवलश्चापि कीर्त्तितः॥ १७७॥

गण्डूषकवलयोर्लक्षणगतभेदः।—

असञ्चारी मुखे पूर्णे गण्डूषः कवलश्चरः।

क्षुद्गार इत्यर्थः। दत्तवस्तिषु कृतनिरूहवस्तिषु। शिरसि अभिहते दण्डादिभिः प्रहते॥ १७३।१७४॥

अथ कवलगण्डूषयोर्नामचतुष्टयमाह, चतुर्विध इति।—स्नैहिकः अवबद्धगतरोमे स्नेहकारकः। प्रसन्नः दोषप्रसादनः। शोधनः कफनिःसारणः। रोपणः मुखस्थव्रण-पूरणः। कवलश्चापि तद्विधः स्नैहिकादिभेदेन चतुर्विधः॥ १७५॥

स्नैहिकादीनां विषयमुपादानञ्चाह, स्निग्धोष्णैरिति।—पित्ते स्वादुशीतैः प्रसादनः शमन इत्यर्थः। "उष्णैः संशोधनः" इत्यत्र "रूक्षोष्णैः शोधनः" इति सुश्रुते तथा "उष्णैः" इत्यत्र "रूक्षैः" तथा "कटूष्णैः" इत्यत्र "कवलः" इति चक्रदत्ते पाठः॥ १७६।१७७॥

कवलगण्डूषयोर्लाक्षणिकभेदमाह, असञ्चारीति।—असञ्चारी सञ्चारणाक्षमः गण्डूषः,

तत्र द्रवेण गण्डूषः कल्केन कवलः स्मृतः ॥ १७८ ॥

गण्डूषे प्रक्षेप्यचूर्णस्य कवलार्थे कल्कस्य च माननिर्देशः।—

दद्यात् द्रवेषु चूर्णञ्च गण्डूषे कोलमात्रया।
कर्षप्रमाणः कल्कश्च कवले दीयते बुधैः ॥ १७९ ॥

गण्डूषकवलधारणोपयोगिवयोनिर्देशः।—

धार्य्यन्ते पञ्चमाद्वर्षाद्गण्डूषकवलादयः ॥ १८० ॥

गण्डूषधारणे कर्त्तव्यतासङ्ख्यानिर्देशः।—

गण्डूषान् सुस्थितान् कुर्य्यात् स्विन्नभालगलाननः।
मनुष्यस्त्रीन् तथा पञ्च सप्त वा दोषनाशनान् ॥ १८१ ॥

गण्डूषधारणस्य समयावधिनिर्देशः।—

कफपूर्णास्यता यावच्छेदो दोषस्य वा भवेत्।
नेत्रघ्राणस्रुतिर्यावत् तावद्गण्डूषधारणम् ॥ १८२ ॥

अतिदेशेन प्रतिसारणकवलयोर्द्रव्यनिर्देशः।—

यस्यौषधस्य गण्डूषस्तस्यैव प्रतिसारणम्।
कवलस्यापि तस्यैव ज्ञेयोऽत्र कुशलैर्नरैः ॥ १८३ ॥

---

चरः सञ्चारणक्षमः कवलः। द्रवेण स्वरसक्वाथादिरूपेण। कल्केन किञ्चिद्द्रवालोडितेन कल्केन ॥ १७८ ॥

गण्डूषकवलार्थे प्रयोज्ययोः चूर्णकल्कयोः मात्रामाह—दद्यादिति ॥ १७९ ॥

गण्डूषकवलोपयोगिवयो निर्देष्टुमाह, धार्य्यन्त इति।—कवलादय इत्यत्र आदि-शब्दात् प्रतिसारणस्य ग्रहणम् ॥ १८० ॥

गण्डूषधारणस्य सङ्ख्यामाह, गण्डूषानिति।—सुस्थितान् सुकृतानित्यर्थः। "सुस्थितान्" इत्यत्र "सुस्थितः" इति शार्ङ्गधरोक्तः पाठः साधुः। स्विन्नभालगलाननः ललाटादिषु कृतस्वेद इत्यर्थः ॥ १८१ ॥

यावन्तं कालं गण्डूषकवलौ धार्य्यौ तदाह, कफेति।—छेदो दोषस्य कठिनीभूतकफस्य सङ्घातभेदनम् ॥ १८२ ॥

अतिदेशेन कवलप्रतिसारणयोर्द्रव्यमाह, यस्येति।—प्रतिसारणं घर्षणं, चूर्णकल्कादिभिर्घर्षणमिति शेषः ॥ १८३ ॥

अथ योगातियोगयुक्तयोः गण्डूषकवलयोर्लक्षणम् ।—

हीनयोगात् कफोत्क्लेशो रसाज्ञानमरुची तथा ।
अतियोगात् मुखे पाकः शोषस्तृष्णा क्लमो भवेत् ॥१८४॥

गण्डूषस्य सम्यग्योगलक्षणम् ।—

व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ।
इन्द्रियाणां प्रसादश्च गण्डूषे शुद्धिलक्षणम् ॥१८५॥

अन्यच्च—

कवलगण्डूषयोर्लक्षणमतभेदान्तरम् ।—

सुखं सञ्चार्यते या तु सा मात्रा कवले हिता ।
असञ्चार्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता ॥१८६॥

अथ रक्तमोक्षणविधिः ।

अतिरक्तस्रावे दोषनिर्देशः ।—

अतिस्रुतौ हि मृत्युः स्याद्दारुणा वाऽनिलामयाः ॥१८७॥

विशुद्धरक्तपुरुषस्य लक्षणम् ।—

प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतपक्तृवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं प्रसन्नरक्तं पुरुषं वदन्ति ॥१८८॥

---

हीनातियोगयुक्तयोर्लक्षणमाह, हीनयोगादिति ।—पाकः शोषः इत्युभयोरेव मुखे इत्यनेनान्वयः ; मुखे पाकः मुखशोषश्च ॥ १८४ ॥

सम्यक्कृतस्य लक्षणमाह, व्याधेरिति ।—वैशद्यम् अपैच्छिल्यं, मुखस्येति शेषः ॥ १८५ ॥

प्राक् उक्तमपि गण्डूषकवलयोर्भेदं मतान्तरमाश्रित्याह, सुखमिति ।—सुगमम् ॥१८६॥

रक्तमोक्षणविधिं वक्तुमिच्छुरादौ अतिरक्तस्रावे दोषमाह, अतिस्रुताविति ।—अनिलामया वातव्याधयः ॥ १८७ ॥

विशुद्धशोणितस्य पुरुषस्य लक्षणमाह, प्रसन्नेति ।—इन्द्रियार्थान् रूपरसादीन्, इच्छन्तं यथायथमभिनन्दन्तम् । अव्याहतपक्तृवेगम् अव्याहतः अप्रतिरुद्धः पक्ता जाठरानलः, वेगः पुरीषादीनां प्रवृत्तिश्च यस्य तादृशं दीप्ताग्निकं यथायथं निःसृतमूत्रपुरीषादिकञ्चेत्यर्थः । "पक्तृ" इत्यत्र "शक्ति" इति पाठः प्रामादिकः ॥ १८८ ॥

रक्तमोक्षणोपयोगिस्थाननिर्देशः।—

मर्महीने यथाऽऽसन्न-प्रदेशे वेधयेच्छिराम् ॥१८९॥

रक्तमोक्षणानुपयोगिवयःप्रभृतिनिर्देशः।—

न त्वूनषोडशातीत-सप्तत्यब्दस्रुतास्रजाम्।

अस्निग्धास्वेदितात्यर्थ-स्वेदितानिलरोगिणाम् ॥१९०॥

गर्भिणी सूतिकाऽजीर्ण-पित्तास्रश्वासकासिनाम्।

अतिसारोदरच्छर्दि-पाण्डुसर्वाङ्गशोथिनाम् ॥१९१॥

स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु।

नायन्त्रितां शिरां विध्येन्न तिर्यङ्नाप्यनुत्थिताम् ॥

नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ॥१९२॥

अथ घृततैलमूर्च्छाविधिः।

घृतमूर्च्छाविधिः,—

मूर्च्छनद्रव्याणां नामपरिमाणादीनां मूर्च्छाफलस्य च निर्देशः।—

पथ्याधात्रीविभीतैर्जलधररजनीमातुलुङ्गद्रवैश्च

द्रव्यैरेतैः समस्तैः पलकपरिमितैर्मन्दमन्दानलेन।

---

रक्तमोक्षणार्थं शिराविधस्थानमाह, मर्महीने इति।—यथाऽऽसन्नप्रदेशे व्याधितस्थानसमीपे। "मर्महीने यथाऽऽसन्नदेशेऽन्या व्यधयेच्छिराम्" इति वाग्भटे पाठः। व्यध्यशिराणामदर्शने मर्मवर्जिते तत्समीपदेशे या अन्याः शिरा दृश्यन्ते ता एव वेध्या इति तदर्थः॥ १८९॥

अवेध्यशिरामाह, न त्विति।—"सप्तत्यब्द" इत्यत्र "सप्तत्यधीक्" इति पाठः आमादिकः। स्रुतास्रजां यस्याद्याघातेन येषां रक्तं निःसृतं, प्राक् शिरावेधादिना वा येषां रक्तं निःसारितं तेषाम्। "सर्वाङ्गशोथिनाम्" इत्यत्र "सर्वाङ्गशोषिणाम्" इति पाठान्तरं न समीचीनम्। स्नेहपीते स्नेहपानानन्तरमित्यर्थः, पूर्वमस्निग्धस्य शिरावेधनिषेधात्; अतिस्निग्धे इत्यर्थो वा। नायन्त्रिता नाबद्धाम्। तिर्यक् वक्रभावेन। अनुत्थिताम् उभयतो यन्त्रणेनापि स्फीता अप्रकाशिताम् इत्यर्थः। आत्ययिकाद्गदात् शिरावेधमन्तरेण विपत्तिजनकात् रोगादित्यर्थः, आत्ययिके तु व्याधौ एतेष्वपि शिरा व्यध्येत्यर्थः॥ १९०—१९२॥

अथ घृततैलयोः संस्कारविशेषं विवक्षुरादौ घृतस्य मूर्च्छनविधिमाह, पथ्येति।

आज्यप्रस्थं विफेनं परिचपलगतं मूर्च्छयेद्वैद्यराजः
तस्मादामोपदोषं हरति च सकलं वीर्य्यवत् सौख्यदायि ॥१९३॥

कटुतैलमूर्च्छाविधिः,—

मूर्च्छनद्रव्याणां नाममात्रादीनां मूर्च्छाफलस्य च निर्देशः।—

वयःस्थारजनीमुस्त-विल्वदाडिमकेशरैः।
कृष्णजीरकह्रीवेर नलिकैः सविभीतकैः॥ १९४ ॥
एतैः समांशैः प्रस्थे च कर्षमात्रं प्रयोजयेत्।
कटुतैलं पचेत् तेन आमदोषहरं परम् ॥ १९५ ॥

एरण्डतैलमूर्च्छाविधिः,—

मूर्च्छनद्रव्याणां नामपरिमाणादिनिर्देशः।—

विकसा मुस्तकं धान्यं त्रिफला वैजयन्तिका।
ह्रीवेरघनखर्जूर-वटशुङ्गा निशायुगम् ॥ १९६ ॥
नलिका भेषजं देयं केतकी च समं समम्।
प्रस्थे देयं शाणमितं मूर्च्छने दधि काञ्जिकम् ॥ १९७ ॥

तिलतैलमूर्च्छाविधिः,—

मूर्च्छनद्रव्याणां नामनिर्देशादिः।—

कृत्वा तैलं कटाहे दृढ़तरविमले मन्दमन्दानलैस्तत्
तैलं निष्फेनभावं गतमिह च यदा शैत्ययुक्तं तदैव।

---

—पथ्या हरीतकी। धात्री आमलकी। जलधरः मुस्तकम्। रजनी हरिद्रा। आज्यप्रस्थं घृतशरावचतुष्टयम्। विफेनं निष्फेनं यथा तथा परिचपलगतं सर्वतोभावेन द्रवीभूतमित्यर्थः। किमर्थं मूर्च्छयेदित्याह, तस्मादिति—तस्मात् मूर्च्छनात् ॥१९३॥

सार्षपतैलमूर्च्छनविधिमाह, वयःस्थेति।—वयःस्था हरीतकी। केशरं नागकेशरम्। ह्रीवेरं बालकम्। प्रस्थे प्रस्थमिते तैले। कर्षमात्रमिति वयःस्थादीनां प्रत्येकम् ॥ १९४ १९५ ॥

एरण्डतैलमूर्च्छाविधिमाह, विकसेति।—विकसा मञ्जिष्ठा। वैजयन्तिका जयन्ती। घनः मुस्तकम्। वटशुङ्गा वटावरोहः। निशायुगं हरिद्रा दारुहरिद्रा च। भेषजं शुण्ठी। शाणमितमिति प्रत्येकम्। दधि काञ्जिकमपि प्रत्येकं शाणमितम् ॥ १९६ १९७ ॥

तिलतैलमूर्च्छाविधिमाह, कृत्वेति।—शैत्ययुक्तं शीतीभूतम्, एतेन उष्णतायां

मञ्जिष्ठारात्रिलोध्रैर्जलधरनलिकैः सामलैः साभयाख्यैः
सूचीपुष्पाङ्घ्रिनीरैरुपहितमथितैर्गन्धयोगं जहाति ॥ १९८ ॥

मूर्च्छनद्रव्याणां मात्राया मूर्च्छाफलस्य च निर्देशः।—

तैलस्येन्दुकलांशिकैकविकसाभागोऽपि मूर्च्छाविधौ
ये चान्ये त्रिफलापयोदरजनीह्रीबेरलोध्रान्विताः।
सूचीपुष्पवटावरोहनलिकास्तस्याश्च पादांशिकाः
दुर्गन्धं विनिहन्ति तैलमरुणं सौगन्ध्यमाकुर्वते ॥ १९९ ॥

पञ्चपल्लवादिना मूर्च्छायाः कर्त्तव्यतानिर्देशः।—

पत्रं पञ्चरसैर्युक्तं दधित्थाम्लसमन्वितम्।
मूर्च्छनं कारयेत् प्राज्ञो गन्धवर्णं जहाति च ॥ २०० ॥

पञ्चपल्लवम्।—

आम्रजम्बूकपित्थानां बीजपूरकबिल्वयोः।
गन्धकर्म्मणि सर्वत्र पत्राणि पञ्चपल्लवम् ॥ २०१ ॥

---

त्वर्थां मूर्च्छनद्रव्यप्रक्षेपो निषिध्यते* इति मन्तव्यम्। अक्षं विभीतकम्। सूचीपुष्पं केतकी, तस्य मूलं ग्राह्यम्। अङ्घ्रिः वटावरोहः। सूचीपुष्पाङ्घ्रिरित्येकपदमिति केचित्, तथात्वे केतकीमूलमित्यर्थः। नीरं बालकम्। उपहितमथितैः मिश्रितकुट्टितैरित्यर्थः। गन्धयोगं तैलस्य दौर्गन्ध्यादिकम् ॥ १९८ ॥

मञ्जिष्ठादिकं मूर्च्छनद्रव्यं कियता मानेन ग्राह्यमित्याह, तैलस्येति।—इन्दुकलांशिकैकविकसाभागः मञ्जिष्ठायाः तैलापेक्षया षोडशभागैकभागः। तस्याः मञ्जिष्ठायाः, पादांशिकाः चतुर्थांशाः, तेन च त्रिफलादीनां प्रत्येकं मञ्जिष्ठापादांशो ग्राह्यः ॥ १९९ ॥

तैलस्य सौगन्ध्यसौवर्णसम्पादनार्थं पञ्चपल्लवादिना मूर्च्छनस्य कर्त्तव्यतामाह, पत्रमिति।—पञ्चरसैर्युक्तं पत्रं वक्ष्यमाणमाम्रादीनां पत्रमित्यर्थः; यद्वा—रसैः युक्तं सरसम्, आर्द्रमित्यर्थः, न तु शुष्कं, पञ्च पञ्चविधं, पत्रम् आम्रादीनां पत्रम्। वर्णं तैलस्य स्वाभाविकवर्णम् ॥ २०० ॥

गन्धिद्रव्याणां विशुद्धिसम्पादनार्थं पञ्चपल्लवमाह, आम्रेति।—बीजपूरकं "टाबा" इति प्रसिद्धफलोऽविशेषः। गन्धकर्म्मणि तैलस्य दुर्गन्धनाशे सौरभ्यसम्पादने चेत्यर्थः ॥ २०१ ॥

अथ गन्धद्रव्यम् ।—

एलाचन्दनकुङ्कुमागुरुमुराकक्कोलमांसीशटी
श्रीवासच्छदग्रन्थिपर्णशशभृत्क्षौणिध्वजोशीरकम् ।
कस्तूरीनखपूतिशैलजशुभामिथीलवङ्गादिकं
गन्धद्रव्यमिदं प्रदेयमखिलं श्रीविष्णुतैलादिषु ॥ २०२ ॥

अपरं गन्धद्रव्यम् ।—

देवदारुसरलागुरुत्वचं तेजपत्रघनकुष्ठकुङ्कुमम् ।
ग्रन्थिपर्णशटिकोग्रगन्धकं मांसिकासुनखखोटि कुन्दुरु ॥२०३॥
पूतिकं मधुरिकेलया नखी चन्दनं सपमरं प्रियङ्गुकम् ।
मेथिकामदसुवास्यचम्पकं देवताड़नलिकासपृक्कया ॥२०४॥
कक्कोलकं कल्कसमानि तैले देयानि सर्वाणि सुगन्धिकानि ।
अन्यान्यशेषाणि हितानि वैद्यैर्वातापहारीणि सुयोजितानि ॥२०५॥

मतान्तरम् ।—

कुष्ठञ्च वालुका पूतिरुशीरं श्वेतचन्दनम् ।
जटामांसी तेजपत्रं नखी मृगमदः फलम् ॥ २०६ ॥
कक्कोलं कुङ्कुमं चोचं लताकस्तूरिका वचा ।
सूक्ष्मैलाऽगुरु मुस्तञ्च कर्पूरं ग्रन्थिपर्णकम् ॥ २०७ ॥

---

अथ तैलानां सौगन्ध्यापादनार्थं गुणोत्कर्षविधानार्थञ्च गन्धपाकोपयोगिद्रव्यमाह, एलेति ।—चन्दनं श्वेतचन्दनं, सुगन्धित्वात् । मुरा मूरामांसी । श्रीवासः नवनीतखोटिः । छदं तेजपत्रम् । शशभृत् कर्पूरः । क्षौणीध्वजः गुग्गुलोरोचना शिह्लकं वा । नखं नखी । पूतिः खट्टाशी । शुभा लताकस्तूरिका ॥ २०२ ॥

मतान्तरीयगन्धद्रव्यमाह, देवदार्विति ।—त्वचं "दारुचिनि" इति प्रसिद्धम् । उग्रगन्धकं वचा । मांसिका जटामांसी । सुनखखोटिः नवनीतखोटिः । कुन्दुरुः कुन्दुरुखोटिः । पमरा गन्धद्रव्यभेदः तया सह वर्त्तमानं सपमरम् । मदः कस्तूरी । सुवास्यचम्पकं सुगन्धिचम्पकम् । देवताडः गन्धद्रव्यविशेषः । पृक्का "पिडिं" इति प्रसिद्धम् । कल्कसमानि स्नेहकल्कतुल्यानि ॥ २०३—२०५ ॥

मतान्तरे गन्धद्रव्यमाह, कुष्ठञ्चेति ।—फलं प्रियङ्गुकम् । चोचं "दारुचिनि" इति

श्रीवासः कुन्दुरुर्देव-कुसुमं गन्धमातृका ।
शिह्लकं मिषिका मेथी भद्रमुस्तं शटी तथा ॥ २०८ ॥
जातीफलं शैलजञ्च देवदारु सजीरकम् ।
एतानि गन्धद्रव्याणि तैलपाकेषु युक्तितः ॥ २०९ ॥

ग्रन्थान्तरस्य—

गन्धद्रव्याणां मात्रानिर्देशः ।—

तैलात् गन्धस्य पादार्द्धं दद्यात् तच्छास्त्रविद्भिषक् ।
केचित् कल्कसमं प्राहुः सर्वत्र गन्धकर्मणि ॥ २१० ॥

इति चतुर्थः खण्डः ।

---

प्रसिद्धम् । देवकुसुमं लवङ्गम् । गन्धमातृका स्वनामप्रसिद्धा । शिह्लकं "शिलारस" इति प्रसिद्धम् । मिषिका मधुरिका ॥ २०६—२०९ ॥

गन्धद्रव्याणां परिमाणमाह, तैलादिति ।—पादार्द्धम अष्टमभागम् ॥ २१० ॥

इति परिभाषा-प्रदीपे चतुर्थखण्डव्याख्या समाप्ता ।

